उक्तो मलयतालेन लघुमध्ये स्फुरद्गुरुः ।
सप्तदशाक्षरैर्युक्तः कमलोऽयं भयानके ।।
लघुर्गुरुर्लघुर्यत्र स भवेन्मलयाभिधः ।।

अष्टादशाक्षरैर्युक्तो यशोहर्षप्रदो ध्रुवः ।
कुहक्कसंज्ञके ताले सानन्दो वीरके रसे ।।
द्रुतद्वन्द्वं लघुद्वन्द्वं ताले कुहक्क[1]संज्ञके ।।

ऊनविंशतिवर्णाङ्घ्रिः सिद्धिदश्चन्द्रशेखरः ।
कथितः कन्दुके ताले भवेच्छृ[2]ङ्गारवीरयोः ।।
द्रुतद्वयं विरामान्तं तालोऽयं कन्दुसंज्ञकः ।।

अपरं नियमं विना ।

विंशत्यक्षरसंयुक्तो ध्रुवः सुखदसंज्ञकः ।
शृङ्गारवीरयोर्ज्ञेयो गुरुणैकेन मण्डितः ।।
एक एव गुरुर्यत्र गुरुतालः स कथ्यते ।।

अपरं नियमं विना ।

एकविंशतिवर्णाङ्घ्रिर्भवेच्छृङ्गारके रसे ।
कुमुदोऽभीष्टदश्चैव ताले तुरगलीलके ।।
द्रुतद्वन्द्वं विरामान्तं लघुस्तुरगलीलके ।।

जयीति नाम्ना[3] ध्रुवको द्वाविंशत्यक्षरान्वितः[4] ।
सन्निपातेन तालेन शृङ्गारेऽभीष्टदे रसे ।।
एक एव गुरुर्यत्र सन्निपातः स उच्यते ।।

अपरं नियमं बिना ।

त्रयोविंशतिवर्णाङ्घ्रिर्ध्रुवः कन्दर्पसंज्ञकः ।
वीरे वा करुणे वा स्यात् खण्डताले विधीयते ।।
द्रुतमेवं भवेद् यत्र खण्डतालः स उच्यते ।।

---

[1] B कुहक.... [2] A भवेत् शृङ्गार.... [3] A नाम [4] B ....क्षरावधि

अपरं नियमं विना ।

चतुर्विंशतिवर्णाङ्घ्रिः कथितो जयमङ्गलः ।
शृङ्गारवीरयोरेव ताले चाचपुटे च सः ॥
गुरुर्लघुः प्लुतश्चैव भवेच्चाचपुटाभिधे ॥

पञ्चविंशतिवर्णाङ्घ्रिस्तिलको ध्रुवको भवेत्[१] ।
इष्टश्च(च्च)त्पुटे[२] ताले रसे वीरेऽद्भुतेऽपि वा ॥
भवेच्च(च्) चत्पुटे ताले गुरुद्वन्द्वं लघुप्लुतः ॥

षड्विंशद[३]क्षरैर्युक्तो ललितो वीररौद्रयोः ।
ताले चञ्चपुटे[४] ज्ञेयो मनः सर्वार्थसिद्धिदः ॥
ताले चञ्चपुटे[५] च स्युर्द्रुतं लघु चतुःप्लुताः ॥

षड्विंशत्यक्षरं यावदारभ्यैकादशाक्षरात् ।
द्विगुणैरक्षरैर्भिन्नं समानं पदमिष्यते ॥
इति ध्रुवकलक्षणम् ॥

अथ मण्डकाः[६] ॥

जयप्रियः कलापश्च कमलः सुन्दरस्तथा ।
मङ्गलो वल्लभश्चेति मण्डकाः षट् प्रकीर्तिताः ॥

जयप्रियो हंसताले लघुमध्ये यदा गुरुः।
ऊनविंशाक्षरैर्युक्तो रसे वीरे स वर्तते ॥
लघुर्गुरुर्लघुर्यत्र हंसतालः स उच्यते ॥

कलापो रङ्गतालेन युक्तो रौद्र[७]रसे हि सः ।
द्वाविंशत्यक्षरैर्युक्तो लघुरादौ गुरुद्वयम् ॥
लघुरादौ गुरुद्वन्द्वं रङ्गताल इतीरितः ॥

---

[१] B मतः [२] A इष्टश्च तत्पुटे [३] B ....विंशत्यक्षरैः [४] A पञ्चपुटे [५] A पञ्चपुटे
[६] B मल्वकाः [७] B रौद्रे

लघुद्वन्द्वं गुरुश्चैकोऽनिलो ए(त्र ?) सगणात्मकः[1]।
पञ्चविंशत्यक्षरैः स्यात् कमलः शान्तहास्ययोः ॥

गुरुरेको लघुद्वन्द्वं त्रिपुटे भगणात्मके।
अष्टाविंशत्यक्षरैस्तु वीरे[2] मङ्गलमण्डकः ॥

षट्पितापुत्रके ताले गलगा गलगात्मके।
चतुस्त्रिंशदक्षरोऽयं वल्लभो रौद्रके रसे ॥

अथ प्रतिमण्डकाः।

सानन्दको[3] विरामश्च द्रुतसैन्यो[4] विधिक्रमः।
प्रसारितश्चेति प्रोक्ताः पञ्चैते प्रतिमण्डकाः ॥

सानन्दकः पद्मताले लघुर्द्रुतं प्लुतस्तथा।
षोडशाक्षरसंयुक्तो रसे वीर उदाहृतः ॥

विरामो द्रुतयुग्मं स्याल्लघुरेकान्तको भवेत्।
अष्टादशाक्षरैर्युक्तो रौद्रे च प्रतिमण्डकः ॥

अपरं नियमं विना।

कन्दताले लघुद्वन्द्वमन्ते द्रुतकमेव च।
विंशत्यक्षरसंयुक्ते द्रुतसैन्यो[5] भयानके ॥

द्रुतद्वन्द्वं विरामान्तं तथा प्रान्ते भवेल्लघुः।
द्वाविंशत्यक्षरैर्युक्तो रसे वीरे विधिक्रमः।

चतुर्विंशतिवर्णैस्तु ताले द्रुतचतुष्टयम्।
भयानके रसे भाति प्रतिमण्डः प्रसारितः ॥

---

[1] B गुरुश्चैकोऽनिनेत्रसगणात्मकः (?) [2] A वीरो [3] B सानन्दोऽथ [4] B द्रुतशैलो
[5] B द्रुतशैलो

अपरं नियमं विना।

कस्यचिन्मते प्रतिमण्डाश्चत्वारो भवन्ति, तेषां नामान्यपि पृथक्। तद् यथा।

आलोलश्चामरश्चैव विचारः कुन्दसंज्ञकः।
चत्वारः कथिता देवि प्रतिमण्डा मनोरमाः॥

द्रुतद्वन्द्वं विरामान्तं ताले तुरगलीलके।
आलोलः कथ्यते तेन शृङ्गाररसनिर्भरः॥

गुरुरेको भवेद् यत्र सन्निपातः स कथ्यते।
अमरो गीयते तेन वीररौद्राद्भुतेष्वपि॥

लघुद्वन्द्वं विरामान्तं ताले कन्दुकसंज्ञके।
विचारो गीयते तेन शान्ते लयविलम्बनात्[१]॥

द्रुतमेकं खण्डताले रसे चाद्भुतसंज्ञके।
द्रुतलयेन गातव्यः कुन्दोऽयं प्रतिमण्डकः॥
प्रतिमण्डा आटताला[२] इति प्रसिद्धाः।

अथ निशारुकाः।

दृढः प्रौढोऽथ खचरो विचर[३]श्चतुरक्रमः।
निशारुकाः प्रतितालाः कथिताः सप्तरूपकाः॥

दृढाख्ये स्याल्लघुद्वन्द्वं ताले च हंसलीलके।
चतुर्दशाक्षरैर्युक्तः शृङ्गारे परिकीर्तितः॥

अपरं नियमं विना।

प्रौढः ख्याते गुरुद्वन्द्वं लघुरेकान्तगो भवेत्।
षोडशाक्षरसंयुक्तो रसे वीर उदाहृतः॥

---

....विलक्षणात् [२] B आटताल [३] A वितरः....

खचरो रङ्गताले स्याद् गुरुरादौ लघुस्तथा ।
शान्तेऽथवा हास्यरसे भवेदष्टादशाक्षरः ॥

विचरोऽथ[1] द्रुतद्वन्द्वं लघुद्वन्द्वं गुरुद्वयम् ।
विंशत्यक्षरसंयुक्तो रौद्रे रस उदाहृतः ॥

द्रुतद्वन्द्वं प्लुतद्वन्द्वं तथा प्रान्ते गुरुर्भवेत् ।
द्वाविंशत्यक्षरैर्युक्तः शृङ्गारे चतुर[2]क्रमः ॥

लघुद्वन्द्वं गुरुद्वन्द्वं तन्न्यास[3]तालकः स्मृतः ।
चतुर्विंशतिवर्णैस्तु रसे हास्ये निशारुकः ॥

आदिगुरोर्द्रुतद्वन्द्वं ताले स्यादद्भुते रसे ।
पट्टुताल इति प्रोक्तः षड्विंशत्यक्षरान्वितः[4] ॥
निशारुका रूपका इति प्रसिद्धाः ।

अथ रासकाः ।

मनोहरोऽथ कन्दर्पश्चारुर्नन्दन एव च ।
चत्वारो रासकाः प्रोक्ताः शङ्करेण स्वयं पुरा ॥

कस्यचिन्मते[5] नामान्यपि पृथक् । यथा[6] ।

विनोदो वरदश्चैव नन्दः कुमुद (कम्बुज?) एव च ।
चत्वारो रासकाः प्रोक्ता गीतवाद्यविशारदैः ॥

मनोहरो द्रुतद्वन्द्वं विरामकपरं तथा ।
रतिताले च करुणे नवाक्षरसमन्वितः ॥

अपरं नियमं विना ।

द्रुतमेकं भागताले दशाक्षरपदान्वितः ।
कन्दर्पो रासकः प्रोक्तो रसे चाद्भुतसंज्ञके ॥

[1] B विचरोऽत्र [2] A चतुरः [3] A तन्कास.... [4] C अक्षरैर्युतः [5] केचिन्मते
[6] B omits यथा

अपरं नियमं विना।

खण्डताले द्रुतद्वन्द्वं तथा प्रान्ते भवेद् गुरुः।
एकादशाक्षरैर्युक्तश्चारुः शृङ्गारहास्ययोः॥

अपरं नियमं विना।

अर्धचन्द्रकताले च गुरुरादौ द्रुतद्वयम्।
द्वादशाक्षरसंयुक्तो नन्दनो वीरसंज्ञके॥

अथ विनोदादयो रासकाः।

आदिताले विनोदः स्यान्नवाक्षरपदान्वितः।
शृङ्गारे च रसे प्रोक्तो विलम्बितलयेन च॥

विलम्बितं द्रुतद्वन्द्वमित्यर्थः।

लघुर्द्रुतो गुरुर्यत्र तालोऽयं गजलीलकः।
वरदः कथितस्तेन रसे हास्ये दशाक्षरः॥

गुरुरेकश्च ताले विद्याधरे स्मृतः[1]।
एकादशाक्षरैरेव नन्दो वीरे रसे मतः॥

राजविनोदताले च गुरुद्वन्द्वमथ प्लुतः।
गीयते कुमुदस्तेन करुणे द्वादशाक्षरः॥

रासकाः छुटिकिला[2] इति प्रसिद्धा।

अथ प्रतितालाः।

कान्तारः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा।
कथिताः[3] शङ्करेणैव चत्वारः प्रतितालकाः॥

कान्तारः प्रतितालस्तु चन्द्रक्रीडे द्रुतद्वयम्।
दशाक्षरपदेनायं शृङ्गारे वर्तते रसे॥

---

[1] A स्मृता [2] B चुटुकिला [3] B कथितः

अपरं नियमं विना ।

लघुद्रुतौ लघुश्चान्ते नृपताल उदाहृतः ।
रुद्रसंख्याक्षरपदः समरो वीरके रसे ।।

द्रुतत्रयस्तु वैकुण्ठे प्रतिताले समीरितः ।
अर्कसंख्याक्षरैः पादो हास्ये त्रिपुटतालके ।।

अपरं नियमं विना ।

वाञ्छितस्तृतीये[1] ताले लघुरेको द्रुतस्तथा ।
त्रयोदशाक्षरैर्युक्तो रसेऽद्भुते[2] प्रकीर्तितम् ।।

अथैकताल्य[3]: ।।

चन्द्रिका विपुला वामा तिस्रश्चैवैकतालिकाः ।

चन्द्रिका खण्डतालेन द्रुतेनैकेन सा भवेत् ।
षोडशाक्षरसंयुक्ता[4] रसे हास्ये समीरिता[5] ।।

अपरं नियमं विना ।

आदिताले लघुस्त्वेको यदि स्याद् विपुला तदा ।
सप्तदशाक्षरैरेषा विख्याता वीरमाश्रिता ।।

अपरं नियमं विना ।

वामैकताली कथिता सन्निपाते गुरुस्तथा ।
अष्टादशाक्षरैरेषा शान्तशृङ्गारसम्भवा ।।

अथ यतयः ।

लीला चान्दोलिता चैव कौमुदी हंसमालिका ।
चतस्रो यतयः प्रोक्तास्तालयन्त्रविधानतः ।।

प्लुतेनैकेन करुणे लीलाख्या यतिरुच्यते ।
त्रयोदशाक्षरैरेषा विज्ञेया यतिवेदिभिः ।।

---

[1] B तृतीय [2] B ....ऽद्भुत [3] A .....ताला: [4] B ....संयुक्तो [5] B समीरितः

अपरं नियमं विना ।

आन्दोलिता लघुद्वन्द्वं विरामश्च द्रुतं तथा ।
पञ्चदशाक्षरैर्युक्ता वीरशृङ्गारयोर्भवेत् ॥

कौमुदी ललिते ताले प्लुतमेकं तथा लघु ।
सप्तदशाक्षरैरेषा रसे हास्ये प्रकीर्तिता ॥

अपरं नियमं विना ।

खद्वयं[1] खद्वयञ्चैव तथा प्रान्ते भवेद् गुरुः ।
ऊनविंशत्यक्षरैस्तु हंसमालाथ शान्तके ॥

अथ झुमरिः[2] ॥

प्रायः शृङ्गारबहुला माध्वीकमधुरा मृदुः (?)।
एकैव झुमरि[3]र्लोके वर्णादिनियमोज्झिता ॥
अतो लक्षणमेतस्या नोदाहारि विशेषतः ॥

इदं हि शालगं सूडं प्रसिद्धं नृपरञ्जनम् ।
अवलेपाम्बुधौ[4] मग्नमुद्दधार शुभङ्करः ॥
सावधानैरिदं लेख्यं लिपिदोषो यमः स्वयम् ।
(?)कुज्झटिर्नेत्रका चाभा तिमिरं यमनी पटः ॥

अथ सङ्कीर्ण[5]सूडम् ।

चैत्रो मङ्गलकस्तथा नगणिका चर्चाभिला टोल्लवी[6]
दोहा स्याद्[7]बहुलस्तथा गुरुबलो गीता च गोवि[8]स्तथा ।
हेवाकोऽप्यथ कारिका त्रिपदिकेत्येतानि कामत्विषा[9]
संक्षेपेण चतुर्दश प्रकटितान्यत्राधमानि क्रमात् ॥

---

[1] A अद्वयं [2] B सुमरिः [3] B सुमरि..... [4] A अवलेपाखुधौ [5] A संकीर्त....
[6] B चर्चाभिलाटो तवी [7] B दोहस्यो.... [8] A गौवि [9] A कामन्विषा

चैत्रश्चैत्रे मासि नित्यं गीयते ।

**अभिपूर्वस्य लादाने धातोरित्यभिलापदम् ।**
**बहुपूर्वस्य लाधातोर्बहुलः पदमिष्यते ॥ ***
**त्रिभिर्वा पञ्चभिर्गीतमितरैर्गायनैरलम् ॥**

एतेषां चतुर्दशगीतानामन्त्यसूडे कथितानां लक्षणं नोक्तं, भरतसंहिताग्रन्थाच्च बोध्यम्[१] । नात्रोक्तं ग्रन्थबाहुल्यभयात्[२] ।

**क्वनत्कनककिङ्किणीरणितसङ्गि (?) रङ्गाङ्गने**
**मृदङ्गधनसोङ्कुरध्वनिभाजि वृन्दावने ।**
**सवंशमधुराधरस्फुरितगीतफुत्कारितः**
**कुरङ्गनयनामनो वत जहार हारी हरिः ॥**

**ख्यातो यः कविचक्रवर्तिपदतो विद्याचनैरञ्चितः**
**सौभद्रेयमिमं यमर्जुनयशाः सोऽजीजनच्छ्रीधरः ।**
**तस्य श्रील-शुभङ्करस्य भणितौ सङ्गीतदामोदरे**
**विस्तारिस्तवको वकारिचरितैश्चारुर्द्वितीयो गतः ॥**

**इति द्वितीयस्तवकः ॥**

---

* A reads after this a verse with corrupt reading :
वयकारो गीतकारिः सर्वगीतकृतौ पटुः ।
तस्य गीतानि यो धत्ते शिक्षाकारः स गायनः ॥

[१] A बोद्धव्यम्   [२] A omits this line

## तृतीयस्तवकः

अथ स्वराः ।

स स्वरो यः श्रुतिस्थाने[1] स्वरन् हृदयरञ्जकः ।।
षड्ज ऋषभगान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः ।।
मयूरवृषभश्छागीक्रोष्टूकोकिलवाजिनः ।
मतङ्गाश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान् ।।
[2][ऋषभं चातको वक्ति धैवतं चापि दर्दुर इति केचित्]
वायुः सम्मूर्च्छितो[3] नाभेर्नाड्याश्च हृदयस्य च ।
पार्श्वयोर्मस्तकस्यापि षण्णां षड्जः प्रजायते ।।
नाभिमूलाद् यदा वर्ण उत्थितः कुरुते ध्वनिम् ।
वृषभस्येव निर्याति हेलया ऋषभः[4] स्मृतः ।।
नाभेः समुद्गतो वायुर्गन्धं श्रोत्रे च चालयन् ।
सशब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ।।
मध्यमो मध्यमस्थानात् शरीरस्योपजायते ।
नाभिमूलाच्च गम्भीरः किञ्चित्तारः स्वभावतः ।।
प्राणोऽपानः समानश्च उदानो व्यान एव च ।
एतेषां समवायेन जायते पञ्चमः स्वरः ।।
गत्वा नाभेरधोभागं वस्तिं प्राप्योर्ध्वगः[5] पुनः ।
[6]धावन्निव च यो याति कण्ठदेशं स धैवतः ।।
षड्जादयः षडेतेऽत्र स्वरा सर्वे मनोहराः ।
निषीदन्ति यतो लोके निषादस्तेन कथ्यते ।।
चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः ।
ऋषभे धैवते तिस्रो द्वे गान्धारे निषादके[7] ।।

सम्पूर्ण तु स्वराः ष ऋ ग म प ध नि। षडेवा (षाडवा ?) निषादोज्झिताः ष ऋ ग म प ध।

---

[1] B श्रुतिस्थान [2] A omits the line [3] A संमर्दितो [4] B drops visarga
[5] B ऊर्द्ध्वगं [6] A धारयन्निव यो [7] B गान्धारनिषादके

[1]ओडवस्वराः ऋपवर्जिताः ष ग म ध नि। सम्पूर्णरागाः सप्तभिः स्वरैर्यथा नाटवसन्तादयः। षडेव (षाडव ?) रागाः षड्भिः स्वरैर्यथा सैन्धवी[2] प्रभृतयः। ओडवरागाः पञ्चभिः स्वरैर्यथा मल्लारादयः।

**अधुना स्वरप्रस्तारः।**

**क्रमेणैव स्वराः स्थाप्याः पूर्वपूर्वपरादधः।**
**मूलक्रमः क्रमात् पृष्ठे पुरस्तूपरवर्तिनः[3]॥**
**स चेदुपरि तत्पूर्वं इत्थं प्रस्तारणक्रमः॥**

अत्र[4] स्वरप्रस्तारे पिङ्गलवन्नष्टोद्दिष्टमेरुपताकाशूचीसप्तसागरप्रभृतयः सन्ति ग्रन्थविस्तरभयान्नोक्ताः[5]।

**[6]कंसारेर्वंशिकावाद्ये स्वराः सप्त चकाशिरे॥**

**अथ गमकाः।**

**स्वश्रुतिस्थानसम्पन्नच्छायां श्रुत्यन्तराश्रयाम्।**
**स्वरो यो मूर्छनामेति गमकः स इहोच्यते॥**
**कम्पितः स्फुरितो लीनो भिन्नो स्थविर[7] एव च।**
**[8]आहतान्दोलितौ चेति गमकाः सप्त कीर्तिताः॥**
**माघपौषनिशायान्तु शेषप्रहरमात्रके।**
**साधकः सलिले स्थित्वा गमकान् सप्त साधयेत्॥**
**दाक्षिणात्या हरिप्रीत्या गायन्ति गमकानिमान्॥**

**अथ गीते गणाः।**

**[9]म-न-भ-य-ज-र-स-ताः विदधति गीते गणनामानि।**
**श्रियमायुर्यशसां धनवृद्धि रुङमरणे[10] प्रवसनकमवृद्धि (?)॥**
**शुभं कुर्वन्ति ते सर्वे प्रथमे ये चतुर्गणाः।**
**शेषे गणाश्च चत्वारो विपरीतफलप्रदाः॥**

---

[1] A ओडवा [2] A सैन्धोडा [3] B पुरःस्थपरिवर्तिनः [4] B अथ [5] A omits ग्रन्थ
[6] B कंसारेवंशिकावाद्ये [7] A भिल्लान्तिरिप (?) [8] A आहतान्दोलितैश्चेति
[9] A ......जारसता (?) इति विदधति गीते गणस्य नामानि [10] A ......धनरुग्मरणानि

म: पृथ्वी नगणो नाको भः शशी यगणो जलम् ।
[1]द्विमात्रिको जकारस्तु रविरित्युच्यते बुधैः ।।
रेफोऽग्निः सगणो वायुर्वियच्च तगणो मतः ।।

देवतानुरूपं फलम् । प्रथमचतुष्कं हरिचरणेषु, शेषचतुष्कं तदरिगणेषु ।

## अथ मूर्छनाः

स्वरः संमूर्छितो यत्र रागतां प्रतिपद्यते ।
मूर्छनामिति तामाह भरतो[2] ग्रामसम्भवाम् ।।
ललिता मध्यमा चित्रा रोहिणी च मतङ्गजा ।
सौवीरी षण्णमध्या[3] च षड्जमध्या च पञ्चमा[4] ।।
मत्सरी मृदुमध्या च शुद्धान्ता च कलावती ।
तीव्रा रौद्री तथा ब्राह्मी वैष्णवी खेचरी स्वरा[5] ।।
नादावती विशाला च त्रिषु ग्रामेषु विश्रुताः ।
एकविंशतिरित्युक्ता मूर्छना चन्द्रमौलिना ।।
मूर्छनां कलयतो मुरशत्रोर्वंशिकाध्वनिवितानैः[6] ।
मूर्छनां ययुरनङ्गशरौघैरङ्गना रतिपतेरिव सेनाः[7] ।।

## अथ वर्गाः ।

[8]अकवर्गपदे विप्रः चटवर्गे च क्षत्रियः ।
तपवर्गपदे वैश्यो यशवर्गे च शूद्रकः ।।
[9]ब्राह्मे वर्गे भवति चिरायुः क्षत्रियवर्गे द्रविणमथायुः[10] ।
[11]वैश्ये पुत्रशतं बहुमोदः शूद्रे मृत्युं पठति कणादः ।।

इष्टग्रहांशानामपि वर्गान्तर्भूतत्वात् अत्र प्रकरणे तेऽप्युदाह्रियन्ते[12] ।

अवर्गे स्याद्देवगुरुः कवर्गे भार्गवः स्मृतः ।
[13]चवर्गे चन्द्र आख्यातष्टवर्गे कुजसूर्यकौ ।।
तवर्गे च बुधः प्रोक्तः पवर्गे च शनैश्चरः ।
यशवर्गे राहुकेतू वर्गेऽष्टग्रहदेवताः ।।

---

[1] B द्वित्रिमात्रिको [2] C तामाहुः कवयो [3] B षण्डमध्या [4] B मध्यमा C मध्यमपञ्चमाः [5] B स्वराः C सुरी [6] AC ......ध्वनिविशेषवितानैः [7] A रतिपतेरिवाङ्गना [8] B अकवर्गे पदे [9] BC ब्रह्मवर्गघटनेन चिरायुः [10] Aद्रविणमथाद्यः C द्रविणमथाश्वः [11] BC ......पुत्रशतं शत लाभः [12] B तेऽप्यत्राक्रियन्ते [13] BC चवर्गे चन्द्रमाख्यातः

इष्टार्थदौ गुरुभृगू यशोवृद्धिकरः शशी ।
दाहकौ कुजसूर्यौ तु[१] बुधः शुभफलप्रदः ।।
राज्यभ्रंशकरः प्रोक्तः शनिः सङ्गीतकोविदैः ।
सर्वनाशकरौ प्रोक्तौ राहुकेतू न संशयः ।।
एकस्त्रिजगतीनाथश्चतुर्वर्गफलप्रदः ।
अपि चेष्टग्रहांशानां फलमेष प्रयच्छति ।।

अथ तानाः ।

विस्तार्यन्ते प्रयोगा यैर्मूर्छनाशेषसंश्रयाः ।
तानास्तेप्यूनपञ्चाशत् सप्तस्वरसमुद्भवाः ।।
तेभ्य एव भवन्त्यन्ये कूटतानाः पृथक् पृथक् ।
ते स्युः पञ्चसहस्राणि त्रयस्त्रिंशद्युतानि च ।।
ष ऋ ग म प ध नीति षड्जग्रामस्य मूर्छनाः ।
[२]म प ध नि ष ऋ गेति मध्यमग्राममूर्छनाः ।
ग म प धि नि ष ऋ[३] गान्धारग्राममूर्छनाः ।।
ग्रामत्रयमूर्छनायां प्रत्येकञ्च भवन्त्यमी ।
ऊनपञ्चाशदिति च सप्तसप्तप्रभेदतः ।।
ऊनपञ्चाशदनिलैर्विष्णुरोचिष्णुमानसैः ।
यतस्तानाः प्रतन्यन्ते[४] ऊनपञ्चाशदप्यतः ।। (?)

अथ ग्रामाः ।

षड्जमध्यमगान्धारास्त्रयो ग्रामा मता इह ।।
षड्जग्रामो भवेदत्र मध्यमग्राम एव च ।
सुरलोके च गान्धारग्रामः[५] प्रचरति ध्रुवम्[६] ।।

इदानीं षड्जग्रामस्य मूर्छना क्रियते । मूर्छना[७] प्रस्तार इत्यर्थः ।

ष-ऋ-गा-म-प-ध-निश्च म-पो-ध-नी-ष-ऋ च गः ।
ग-म-पा-ध-नि-षा-ऋश्च ग्रामत्रितयमूर्छनाः ।।

---

[१] A ......कुजसूर्यौ च C ......कुजशुक्रौ तु [२] B omits the line [३] B drops नि C ग म प ध ष स [४] B प्रतन्त्यन्ये [५] B गान्धारः ग्रामः C गान्धारो ग्रामः [६] C ......स्वयम् [७] A omits मूर्छना

षऋ-गा-म-प-धा-निश्च नि-षो-ऋ-ग-म-पाश्च धः ।
[१]ध-नि-षा-ऋ-ग-माः पोऽन्ते पधौ निषौ ऋगौ च मः ।।
मपौ धनी च ष-ऋ-गा ग[२]-म-पा-ध-नि-षाश्च ऋः ।
ऋगौ मपौ धनीषोऽन्ते मूर्छनाः सप्तषड्जजाः[३] ।।
आदिद्वि[४]त्रिचतुःपञ्चषट्सप्तस्वपि सा मता ।।
मध्यमो मो यदा तेषु मध्यमग्राममूर्छनाः ।
आदौ गकारो यत्रास्ति गान्धारग्राममूर्छनाः ।।

तत्र षड्जग्रामप्रस्तारस्यायं क्रमः ।

[५]षड्जान्निषधान्तं नेर्धान्तं धात् पान्तमिष्यते ।
पान्मान्तं मध्यमाद्गान्तं गात् ऋषभान्तमिष्यते ।
ऋषभात् षान्तमित्याहुः षड्जग्रामस्य मूर्छनाः[६] ।।
मध्यमग्रामजास्त्वेवं मूर्छनाः परिकीर्तिताः ।
मकारादिक्रमेणैव गकारान्तास्तु ता मताः ।।
तारो मन्द्रश्च घोरश्च इति ग्रामनिरूपणाः[७] ।।
षड्जग्राममूर्छनायाः सप्त कोष्ठा निरन्तरम्[८] ।
ब्रह्मविष्णुशिवैरुक्तास्त्रयो ग्रामा मनोहराः ।।

## अथ रागाः ।

यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्तिनाम् ।
ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः ।।
गोपीभिर्गीतमारब्धमेकैकं कृष्णसन्निधौ ।
तेन जातानि रागाणां सहस्राणि च षोडश[९] ।।
रागेषु तेषु षट्त्रिंशद्रागाः जगति विश्रुताः ।
कालक्रमेण तत्रापि ह्रास एव तु दृश्यते ।।
केचिद् वदन्ति ते सर्वे रागाः सन्तीति निश्चितम् ।
मेरोरुत्तरतः पूर्वे पश्चिमे दक्षिणे तथा ।
समुद्रकाश्च[१०] ये देशास्तत्रामीषां प्रचारणा ।।

---

[१] A ऋनिधा (षा) (?) [२] BC drops ग [३] BC षड्जाः [४] B drops द्वि
[५] A षान्निपर्यन्तमूर्छं नेधन्तिमुक्तम् (?) [६] BC मूर्छना [७] A ग्रामस्य मूर्छना
[८] B सप्त कौष्ठानि and drops निरन्तरम C सप्त कोष्ठानि and drops निरन्तरम्
[९] B षोडशः [१०] C समुद्रकन्ठे

तथा च अङ्ग-वङ्ग-कलिङ्ग-तेलङ्ग-भूलिङ्ग-हारङ्ग-मुरङ्ग[१]-यूपलङ्ग लेखाङ्ग - सौवीर - कीर - काश्मीर - नाभीर - नाहीर - सिन्धु - जालन्धर - मग - मगध निषध - मलय - हीहय - गजाह्वय-मालव-जालव-मरु-मुरु-चोल-उत्कल-कुन्तल-सिंहल - हरिकेल - केरल - कोशल-सलिलवान[२]-मल्ल-भल्ल-सौविल्ल-वाट[३]-किञ्जात - गुज्जरात - कुञ्जर[४]- कालञ्जर[५]-गौडद्राविडौ - आन्तर्वेदि-चेदि-काञ्ची-पञ्चाल - सौराष्ट्र[६] - महाराष्ट्र - शवर - लोहावर[७]-खश[८]-रणश-कीकश- (श) वरूप - कामरूप - हरिगर्भ - विदर्भ-दुर्मट-वट[९]-कीकट-दोरङ्गण-टङ्गण[१०]-लाट-भोट - कराट - करहाट - कर्णाट - कुन्तिकावन्तिक[११] - कनकाब्ज - कान्यकुब्ज - भोज[१२] - कम्बोज - ते (भे ?) जि-तुखार-विहार-वलीहार-राजगेह-विदेह-वाहलीक[१३] - (चञ्चरीक) - त्रिगर्तानर्तादिदेशेषु रागाः प्रचरन्तीति ।

किञ्चात्र प्रचरतां षट्त्रिंशद् रागाणां नामानि कथ्यन्ते ।

रागाः षडेव तु प्रोक्ता रागिण्यस्त्रिंशदेव हि ।।
भैरवोऽथ वसन्तश्च रागो मालवकौशिकः[१४] ।
श्रीरागो मेघरागश्च नटनारायणस्तथा ।।
भैरवी कौशिकी चैव भाषा वेलावरी[१५] तथा ।
वङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः ।।
आन्दोलिता च देशाख्या लोला प्रथममञ्जरी ।
मन्दारी चेति रागिण्यो वसन्तस्य सदानुगाः ।।
गौडी गुण्डकिरी[१६] चैव वराडी च क्षमावती ।
कर्णाटी चेति रागिण्यः प्रिया मालवकौशिके ।।
गान्धारी देवगान्धारी मालवश्रीश्च सावरी ।
रामकिर्यपि रागिण्यः श्रीरागस्य प्रिया इमाः ।।
ललिता मालसी गौरी[१७] लाटी देवकिरी तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः सुवल्लभाः ।।
तारामणिस्तथाभीरी कामोदी गुज्जरी तथा ।
ककुभा[१८] चेति रागिण्यो नटनारायणप्रियाः ।।

[१] AC सुरङ्ग [२] A मल्लिवाल [३] A वाड [४] A गुञ्जर [५] A drops कालञ्जर
[६] A सुराष्ट्र [७] B लोहार [८] B वखश [९] A नट [१०] A दोरङ्ग-णट-कुण-लाट
[११] A कुन्तिकावन्ति [१२] B भौज [१३] A adds चञ्चरीक after this [१४] A कौशिकौ
[१५] AC वेणावली (?) [१६] BC गुणकिरी [१७] A ......सौरी [१८] B कन्दुभा (?)

अपरे तु—

आदौ मालवमल्लारलाटकर्णाटपञ्चमाः ।
तोडी वराडी गान्धार हिन्दोल[१]कुच्छु (?) कोडवाः ॥
धानसी मालसी गौरी राडीकामोदमाधवाः ।
राज्ञी वसन्तदेशागवङ्गालाः पठमञ्जरी ॥
वेलावली गोण्डकिरी गुज्जरी भाषटङ्कुशाः ।
खम्भावती[२] मधुकिरी[३] शालका देवकिर्यपि ॥
रामकिरी हिमकिरी[४] ललिता चाथ[५] भैरवी ।
ततो मोटकिरी चेति रागाः षट्त्रिंशदीरिताः ॥

एषां लक्षणं यथा[६]—

नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः ।
सङ्गीतशालां प्रविशन् प्रदोषे
मालाधरो मालवरागराजः ॥
शङ्खावदातं पलितं दधानः
प्रलम्बकर्णः कुमुदेन्दुवर्णः ।
कौपीनवासाः खविहार[७]चारी
मल्लाररागः शुचिशान्तमूर्तिः ॥
तुरङ्गमस्कन्धनिबद्धरागः
स्वर्णप्रभः शोणितशोणगात्रः ।
संग्रामभूमौ विचरन् धृतासि-
र्लाटोऽयमुक्तः किल काश्यपेन ॥
कृपाणपाणिर्गज[८]दन्तखण्ड-
मेकं वहन् दक्षिणकर्णपूरे ।
संस्तूयमानः सुरचारणौघैः
कर्णाटरागः शिखिकण्ठनील:[९] ॥

[१] BC हिल्लोल (?) [२] B खण्डावती [३] A मधुकरी [४] C हिमकरी [५] AB अथ
[६] C तथा B omits the line [७] C सविहार...... B परिहार...... [८] B कुज......
[९] BC ......नीलकण्ठः

विलासिनी चामरचालनेन
लब्धानिलोऽलङ्कृतहेमपीठः।
गन्धर्वराट् काञ्चनकान्तिराढ्यः
श्रीमानयं मालवपञ्चमाख्यः॥
उन्निद्रपङ्केरुहचारुनेत्रा
कुरङ्गशावं कलमा[1]ङ्कुरेण।
सम्भावयन्ती विपिनोपकण्ठे
तोडीयमिन्दीवरदामरम्या॥
विनोदयन्ती दयितञ्च गौरी
सुकङ्कणा चामरचालनेन।
कर्णे दधाना सुरपुष्पगुच्छं
वराङ्गनेयं कथिता वराडी॥
जटां दधानः कृतभूतिभूषणः
काषायवासास्तनुदेहयष्टिः।
सयोगपट्टः[2] कृतनेत्रमुद्रो[3]
गान्धाररागः कथितस्तपस्वी॥
नितम्बिनीमन्दतरङ्गितासु
दोलासु खेलासुखमादधानः[4]।
खर्वः कपोतद्युतिकर्पुरश्री-
र्हिन्दोलरागः कथितो मुनीन्द्रैः॥
पीतं वसाना वसनं सुकेशी
वने रुदन्ती पिकनाददूना[5]।
विलोकयन्ती ककुभोऽतिभीता
मूर्तिः प्रदिष्टा ककुभस्तथेयम्॥
क्रोडे दधानः सुतनुं[6] तदास्ये
पत्रावलीं चारु विनिर्मिमानः[7]।
विद्याधरः सर्वकलाभिलाषी
स कोडकाख्यः[8] कथितोऽयमन्यः[9]॥

[1] C कमला...... [2] B ......पट्टी [3] B ......गुच्छो [4] B ......ददानः
[5] A ......दानदूना [6] A सुतनुस्तदास्ये [7] A विनिर्मंमानः [8] A कोतकाख्यः
[9] A ......मन्त्वः C कथितो यदुत्तमः

दुर्वादलश्यामतनुर्मनोज्ञा
कान्तं लिखन्ती फलके विदग्धा ।
बाला गलल्लोचनवारिबिन्दु-
निस्यन्दधौतस्तनधृग् धनासी[१] ।।
नीलारविन्दस्य[२] दलानि बाला
विधारयन्ती तनुदेहयष्टिः ।
मालूरवृक्षस्य तले निषण्णा
शोणा मृदुर्मालसिका प्रदिष्टा ।।
शुचिहरिचन्दनपङ्कै
रतिसहितं मन्मथं पुरः कृत्वा ।
गौरतनुर्व्रतविधिना
गौरी[३] परिपूजयत्येषा ।।
आराममध्ययाता कुमारिका
शारदेन्दुमुखलक्ष्मीः ।
राडी[४] दाडिम[५]बीजं
ददती[६] कीराननें गौरी ।।
अक्षमालां करे कृत्वा
वसानस्तारवीं त्वचम् ।
जपन् जह्नुसुतातीरे
कामोदः परिकीर्तितः ।।
विस्पष्ट[७]कृष्णाजिनमध्यवर्ती
कान्तः पवित्रः स्थविरोऽतिशुद्धः ।
कुर्वन् कथां तुम्बुरुनारदाभ्यां
श्रीमाधवादिः कथितो मुनीन्द्रैः ।।
उदारनेपथ्यमनोज्ञमूर्ति-
र्गौरोचनाचारुशरीरयष्टिः ।
विधारयन्ती मधुराङ्गहारान्
राज्ञीयमङ्गीकृतलास्यलक्ष्मीः ।।

---

[१] A वनासी [२] C लीला...... [३] B गौडी [४] C राडि [५] A दाडीम
[६] C दधती [७] B निस्पष्ट......

शिखण्डिवर्होच्चयबद्धचूडः
पुष्णन् पिकं चूतलताङ्कुरेण ।
भ्रमन् मुदा वाममनङ्गमूर्ति-
र्मतङ्गमत्तः स वसन्तरागः ॥
आस्फोटनाविष्कृतलोमहर्षो
नियुद्धसम्बद्ध[१]विशालबाहुः ।
प्रांशुः प्रचण्डद्युतिहेमगौरो
देशागरागः स हि मल्लराजः ॥
मनोज्ञमौञ्जीगुणगुम्फिताङ्ग-
स्त्वचं[२] दधानो धरणीरुहस्य ।
चण्डः कुमारः कमनीयमूर्ति-
र्वङ्गालरागः शुचिसामगानः ॥
वियोगिनी कान्तवितीर्ण[३]पुष्पां
स्रजं वहन्ती वपुषातिमुग्धा ।
आश्वास्यमाना प्रियया च सख्या
विधूसराङ्गी पठमञ्जरीयम् ॥
सङ्केतदीक्षां दयितस्य दत्त्वा
वितन्वती मण्डनमङ्गयष्टेः ।
मुहुः स्मरन्ती स्मरमिष्टदेवं
वेलावली नीलसरोजकान्तिः ॥
रतोत्[४]सुका कान्तपथप्रतीक्षा-
मालोचयन्ती मृदुपुष्पतल्पे ।
इतस्ततः प्रेषितदृष्टिदूती
श्यामाङ्गिका गोण्डकिरी प्रदिष्टा ॥
श्यामा सुकेशी मलयद्रुमाणां
मृदूल्लसत्पल्लवतल्पयाता ।
श्रुतेः स्वराणां दधती विभागं
तन्त्रीमुखा दक्षिण[५]गुज्जरीयम् ॥

---

[१] A नितम्बसन्नद्ध...... [२] A ......त्वचं [३] A ......विदीर्ण...... [४] A रत्युत्......
[५] C कुक्षिन......

स्वच्छन्दसम्मानितपुष्पचापः
प्रियाधरास्वादसुखेन हृष्टः ।
पर्यङ्कमध्यास्य[१] कृतोपवेशो
भाषः स निद्रोत्थितहेमगौरः ।।
गन्धर्वराजतनया विरचितकुसुमेषुवेश[२]रमनीया ।
चन्दनशुभ्रशरीरा गच्छन्ती टङ्कुशा दयितम् ।।
वासो वसाना शरदभ्रशुभ्रं
विरिञ्चिवेदीपरिकर्मदक्षा ।
कुन्दावदाता चतुराननस्य
खम्भावती लब्धसमृद्धसेवा ।।
आताम्रमौलिनेत्रा चम्पकगौरी कृतसुरतारम्भा[३] ।
मुखमधुलुब्धान् भ्रमरान् मधुकिरिका वारयत्येषा ।।
वीणाविनोदप्रतिपन्नपाणि-
र्गृण्वन् कथां नारदसम्प्रयोगात् ।
श्यामो युवा विप्रकुल[४]प्रसूतः
स शालको नाटचमुनिप्रणीतः ।।
भ्रमन्ती नन्दने श्यामा पुष्पप्रचयतत्परा ।
ख्याता देवकिरी ह्येषा करार्पितसखीकरा ।।
स्वर्णप्रभा भास्वरभूषणा च
नीलं निचोलं वपुषा वहन्ती ।
कान्ते पदोपान्तमधिश्रितेऽपि
मानोन्नता रामकिरी प्रणी (गी? )ता ।।
कङ्केलि[५]पल्लवं पाणौ बिभ्राणा स्वर्णकङ्कणा ।
चुम्बन्ती दयितं रागाद् गौरी हिमकिरी श्रुता ।।
प्रफुल्लसप्तच्छदमाल्यधारी
युवातिगौरोऽलसलोचनश्रीः ।
विनिःसरन् वासगृहात् प्रभाते
विलासिवेशो ललितः प्रदिष्टः ।।

---

[१] C ......मध्यस्य A ......मध्यस्थ..... [२] B सुवेश...... [३] C ......सुरतवतन्ता (?)
[४] AC मुरारिप्रकुल...... [५] B कङ्केल्लि......

सरोवरस्थ[1]स्फटिकस्य मण्डपे
सरोरुहैः शङ्करमर्चयन्ती ।
तालप्रयोगप्रतिबद्धगीति-
गौ री कृशाङ्गी किल[2] भैरवीयम् ॥
अवचित्य कुसुमराशिं[3]
रचयन्ती पुष्पदामकमनीयम् ।
नन्दनवनोपकण्ठे
सुरतमना मोटकिरी[4] स्यात् ।

कुहु[5]रिति ककुभो नाम । तथा च रत्नकोषे—कुहुरुतेनापि मुहुर्दुनोतीति[6] । तथा च तुम्बुरुनाटके—कहोरहोनुतापिण्यः[7] पिकाः पीकारवं दधुरिति ।

श्रीपञ्चम्याः समारभ्य यावत् स्याच्छयनं हरेः ।
तावद् वसन्तरागस्य गानमुक्तं मनीषिभिः ॥
इन्द्रोत्थानात् समारभ्य यावद् दुर्गामहोत्सवम् ।
गेया तावद् बुधैर्नित्यं मालसी सा मनोहरा[8] ॥
प्रातर्गेयास्तु देशागो ललितः पठमञ्जरी ।
विभाषो भैरवी चैव कामोदो गोण्डकिर्यपि ॥
एका वराडी मध्याह्ने सायं कर्णाटमालवौ ।
लाटश्चैव विशेषेण शेषा गेयास्तु सर्वदा ॥
हिन्दोलश्च वसन्तश्च वसन्ते रक्तिदायकः ।
लाटो गौडी वराडी च गुर्जरी देशिरेव च ॥
पूर्वाह्ने गानमेतेषां निषिद्धमिति तद्विदः ॥
नैवापराह्ने गातव्यौ भैरवीललितौ क्वचित् ।
रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ॥
शुद्धशालगसंकीर्णैर्धातुमातु[9]विचारतः ।
देश[10]भाषाविशेषाच्च रागसंख्या न विद्यते ॥*

[1] AC सरोवरस्थे [2] AC गौरीतनुर्नारदभैरवीयम् [3] B अवचिकुसुमान्यवचयन्ती A भावचित्यकुसुमा...... [4] B मोटकिरिका [5] B कहु...... [6] B कहुर्धुनोतीति [7] A ......तापिन्याः [8] B मनोरमा [9] B संकीर्णैरुत्तमा...... [10] A शेष.....

* C stops here abruptly and omits the whole section till the end of the third chapter and joins this part with the beginning of the fourth chapter.

न रागाणां न तालानामन्तो जगति विद्यते ।
यथाकाले समारब्धं गीतं भवति रञ्जकम् ।।
अतः स्वरस्य नियमाद्रागेऽपि नियमः कृतः ।।
रागान् दधति गोविन्दे रागान् दधति चेतसि ।
गोपिका गोपिकापत्यौ (?) भावानां भाविनामपि ।।

## अथ गीताङ्ग्यो गीतपादाः ।

आरम्भो घटः परिचयो निष्पत्तिरिति[१] चत्वारः पादाः । अथवा केषाञ्चिन्मते गीत[२]पादास्त्रयः । उद्ग्राहमेलापकाभोगा इति प्रसिद्धाः । किञ्च घोषा इति प्रसिद्धस्य खण्डस्य ध्रुवक इति नाम । पदेभ्यः पृथगेतत् । किञ्च गीतपादमध्ये विधिरप्यन्तर्भूतः[३] । तत्र विधयः[४] पञ्च भवन्तीति । कढ्ढाल[५] मधुरं मिश्रं प्रोञ्छनं रक्तिभञ्जकमित्येते ।

वराहरूपे चत्वारो वामने द्वे हरेस्त्रयः ।
यतः पादास्ततो गीते पादास्तत्संख्यया क्वचित् ।।

## अथ तालाः ।

चच्चत्[६]पुटश्चाचपुटः षट्पितापुत्रकस्तथा ।
उद्घट्टकः[७] सन्निपातः कङ्कणः कोकिलारवः ।।
राजकोलाहलो रङ्गविद्याधरशचीप्रियौ ।
पार्वतीलोचनो राजचूडामणिजयश्रियौ ।।
वादकाकुलकन्दर्पनलकूवरदर्पणाः ।
रतिलीलो मोक्षपतिः श्रीरङ्गः[८] सिंहविक्रमः ।।
दीपको मल्लिकामोदो गजलीलश्च चर्चरी ।
कुहक्को विजयानन्दो वीरविक्रमढेङ्कके[९] ।।
वङ्गाभरणश्रीकीर्तिवनमालीचतुर्मुखाः ।
सिंहनन्दननन्दीशचन्द्रबिम्ब[१०]द्वितीयकाः ।।
जयमङ्गलगन्धर्वमकरन्दत्रिभङ्गयः ।
रतितालो वसन्तश्च जगज्झम्पोऽथ गारुनिः ।।

---

[१] A आरम्भ घट परिचय निष्पत्ति इति (?) [२] B गीते [३] A ......भूता [४] A विषयाः
[५] B तत्रालं (?) [६] B चञ्चत् [७] B उद्घाटकः [८] A श्रीरङ्ग......
[९] A .....ढेङ्किके [१०] A चन्द्रविद्म (?)......

कविशेखरघोषौ च हरवल्लभभरवौ।
गतप्रत्यागतो मल्लतालो भैरवमस्तकः ।।
सरस्वतीकण्ठाभरणः क्रीडानिःसारुरेव च ।
मुक्तावली रङ्गराजभरतानन्दादितालकाः ।।
सम्पर्केष्टक[१] इत्यादि तालाः भरतसम्मताः ।
संक्षेपतो निगदिता अथैषां लक्षणं यथा ।।
अर्धमात्रं द्रुतं ज्ञेय[२]मेकमात्रं लघु स्मृतम् ।
द्विमात्रन्तु गुरुर्ज्ञेयं त्रिमात्रन्तु प्लुतं मतम् ।।
ताले चच्चत्[३]पुटे ज्ञेयं गुरुद्वन्द्वं लघुः प्लुतः ।
गुरुर्लघुः प्लुतश्चैव भवेच्चाचपुटाभिधे ।।
गलगा गलगाश्चैव[४] षट्पितापुत्रके मताः ।
उद्घट्टके[५] तु मगणः सन्निपाते गुरुर्मतः ।।
चतुर्विधः परिज्ञेयस्तालः कङ्कणनामकः ।
पूर्णः खण्डः समश्चैव विषमश्चैव कथ्यते ।।
लचतुष्कं गणौ[६] पूर्णे खण्डे बिन्दुद्वयं गुरुः ।
यगलस्तु समे[७] ज्ञेयस्तगणो विषमे भवेत् ।।
खचतुष्कं सयत्यन्तं[८] गुर्बिन्दुचतुष्टयम् ।
सयत्यन्तं लघुश्चैव तालोऽयं कोकिलारवः ।।
लचतुष्कं सयत्यन्तं खत्रयं खत्रयं लघु ।
लघुर्बिन्दुद्वयं चेति राजकोलाहलाभिधे ।।
खद्वयं द्वौ प्लुतौ यत्र रङ्गविद्याधरः स तु ।
लघूनि त्रीणि यत्र स्युर्गुरूणि त्रीणि यत्र वै ।।
प्लुतद्वयञ्च यत्रास्ति स तालः स्याच्छचीप्रियः ।।
खद्वयं[९] गुरु लौ बिन्दू[१०] गौ प्लुतौ गौ प्लुतौ पुनः ।
यत्र तालः स विज्ञेयः पार्वतीलोचनाभिधः ।।
राजचूडामणौ बिन्दु लश्च बिन्दु लगौ मतौ ।
वगणो लो गुरुश्चैव जयश्रीरिति कथ्यते ।।

---

[१] A सम्पद्धेष्टक [२] B .....मेकः [३] B चञ्चत्...... [४] B गलगारगणश्चैव
[५] B उद्घाटके [६] B ......चतुष्कगणे [७] B यगणस्त्वसमे [८] A अचतुष्कं सयत्यन्तं
[९] A खद्वन्द्वं [१०] A ......विन्दु

प्लुतौ लघुचतुष्कञ्च मौ लौ द्रुतयुगं लघु ।
[1]लचतुष्कं विना शब्दं तालः स्याद्द्वादकाकुलः ।।
द्रुतद्वयं यकारश्च कन्दर्पोऽपि प्रकीर्तितः ।।
चत्वारो गुरवो यत्र चत्वारः प्लुतका अपि ।
लघ्वक्षराणि चत्वारि तालोऽयं नलकूवरः ।।
बिन्दुद्वयं गुरुश्चैव भवेद् यत्र स दर्पणः ।।
रतिलीले विधातव्यं लघुद्वन्द्वं गुरुद्वयम् ।
आदौ षोडशगुरवो द्वात्रिंशल्लघवस्ततः ।।
चतुःषष्टि द्रुता यत्र सोऽयं मोक्षपतिर्मतः ।
श्रीरङ्गसंज्ञके ताले सगणाल्लघुप्लुतौ[2] मतौ ।।
सिंहविक्रमताले तु मगणो नखनाः[3] (?) खगौ ।
प्लुतो लघुप्लुतश्चैव ताले दीपकनामनि ।।
ताले स्यान्मल्लिकामोदे लद्वयं खचतुष्टयम् ।
लचतुष्कं विरामान्तं गजलीले प्रकीर्तितम् ।।
अष्टकृत्वस्तु चर्चर्या[4] विरामान्ते द्रुतौ लघु (?) ।
द्रुतद्वन्द्वं भवेत्ताले कुहक्काख्ये लघुद्वयम् ।।
भवेयुर्विजयानन्दे लत्रयञ्च गुरुत्रयम् ।
वीरविक्रमताले तु द्रुतौ लौ गौ ततः प्लुतः ।।
ढेङ्किकार[5]गणेन स्यादे[6]कैनैव कृतास्पदे ।
भ (?) गणो न (?) प्लुतौ[7] स्यातां वङ्काभरणनामके ।।
श्रीकीर्तिसंज्ञके ताले गुरुद्वन्द्वं लघुद्वयम् ।
चतुर्द्रुता[8] लघु द्वौ तु द्रुतौ गो (गौ ?) वनमालिनि ।।
चतुर्मुखाभिधे ताले जगणानन्तरं प्लुतम् ।
तगणः (?) प्लुतो नगौ बिन्दुद्वयं गौणः प्लुतस्तथा ।।
लघुप्लुतो गुरुश्चैको लघुद्वयमथापि च ।
निःशब्दं[9] लचतुष्कञ्च ताले स्यात् सिंहनन्दने ।।

---

[1] B omits two lines from लचतुष्कं to प्रकीर्तितः । [2] B सगणाल्लप्लुतौ
[3] B सगणो नखलाः [4] A चर्चार्चा [5] A ढेंकिकार...... [6] A स्या एकै (?)
[7] B तगणो गप्लुतौ [8] B चतुद्रुती [9] B निःशब्दो

गोलघुगौ लघुः प्लुतस्ताले नन्दीश्वरे मताः ।
गौ द्रुतौ लौ प्लुत[१]द्वन्द्वं चन्द्रबिम्बे प्रकीर्तितम् ॥
द्रुतद्वन्द्वं लघुश्चैकताले स्यात्तु द्वितीयके ।
सकारश्च यकारश्च जयमङ्गलनामनि ॥
चत्वारो गुरवो बिन्दू[२]चत्वारश्च प्लुता अपि ।
बिन्दवो दश षट् लाश्च ताले गन्धर्वसंज्ञके ॥
मकरन्दे द्रुतद्वन्द्वं लघुद्वन्द्वमतो गुरुः ।
लघुर्गुरुः प्लुतश्चैव[३] त्रिभङ्गिः परिकीर्तितः[४] ॥
गुरुर्लघुःप्लुतश्चैव रतिताले प्रकीर्तितः ।
वसन्तताले कर्तव्यो लगणो मगणस्तथा ॥
जगज्झम्पे[५] गुरुश्चैको विरामान्तञ्च खद्वयम् ।
गारुणौ[६] तु लघुद्वन्द्वं गुरुद्वन्द्वञ्च खद्वयम् ॥
गप्लुतौ लो द्रुतौ लश्च प्लुतौ[७] गौ कविशेखरे ।
प्लुतः शून्येन लौ लश्च[८] खद्वयञ्च ततो लघु ॥
खचतुष्कं विना शब्दं यत्र घोषः स उच्यते ।
हरवल्लभताले च प्लुतो लो गौ च खद्वयम् ॥
भगणः प्लुतो[९] गलौ यलौ प्लुतो लश्च भैरवे ।
गतप्रत्यागते ताले लौ गौ गौ लौ प्रकीर्तितौ ॥
चतुर्लघुर्मल्लताले विरामान्तं द्रुतद्वयम् ।
लगौ गौ लो लगौ गश्च खद्वयं लद्वयं पुनः ॥
लचतुष्कं विना शब्दं ताले भैरवमस्तके ।
सरस्वतीकण्ठाभरणे गौ लघू च द्रुतद्वयम् ॥
एक एव प्लुतो यत्र क्रीडातालः स उच्यते ।
द्रुत[१०]द्वन्द्वं विरामान्तं ताले निःसारुके मतः[११] ॥
खत्रयं सविरामान्तं लौ पुनः खत्रयं तथा ।
प्लुतो[१२]गः खयुगं गश्च यत्र मुक्तावली तु सा ॥

---

[१] B गोलघुगौलघुप्लुत [२] A बिन्दुश्चत्वा...... [३] B reads instead प्लुतश्चैव च गौ चैव [४] B परिकीर्तिता [५] B जगज्झम्भो [६] A गारुलौ [७] A प्लुतो [८] A reads instead प्लुतशून्ये नमौनश्च [९] A भगनप्लुतौ [१०] B प्लुतः...... [११] B मतम् [१२] A प्लुतौ

लगौ बिन्दुयुगं गौलो[1] रङ्गराजे प्रकीर्तितः ।।
खद्वयं सविरामान्तं गुरुः प्लुतद्वयं लघु[2]ः।
यत्र ताले स विज्ञेयः भरतानन्दसंज्ञकः ।
आदिताले लघुश्चैक इत्याह भरतो मुनिः ।।
मगणश्च प्लुताद्यन्तः[3] संपक्के[4]ऽष्टकतालके ।
एकाधिकशते ताले षष्टिर्मुख्यतमा इमे ।।

### अथ प्रस्तारः ।

गुरुप्लुताधोभागे तु गुर्वधोभागतो लघुः।
द्रुतं लघोरधोभागे तुल्ये तुल्या तु पंक्तिका ।।
उद्वृत्ता च कलापश्चा[5] (स्या?) दित्थं प्रस्तारणक्रमः ।।
सर्वप्लुतात् समारभ्य मात्रानिवहनिर्मितात् ।
तावत् प्रस्तारयेदन्ते[6] यावत् सर्वं द्रुतं भवेत् ।।

अत्र तालप्रस्तारे पिङ्गलवन्नष्टोद्दिष्टमेरुपताका[7]दयः सन्ति ग्रन्थबाहुल्यभयान्नोक्ताः। इति प्रस्तारः ।

### अथ प्लुतादिमात्राभेदेन तालघातनम् ।

ताले निष्णातहस्तः प्लुतमनु घटयेद् घातमेकं सशब्दं
तत् पश्चाद् द्वौ च घातौ निनदविरहितौ दर्शयेदूर्ध्वतोऽधः ।
शून्यत्वात् फक्कताला[8]विति जगति पुनः सुप्रसिद्धौ सुनद्धा[9]-
वित्थं घातत्रयं तत्त्रिकलतनुमनु[10]वर्णयेद् वर्णकारः ।।
एको घातः सशब्दो[11] द्विकल इह गुरौ शब्दहीनस्तथान्यः
सोऽप्यूर्ध्वं याति लीलावलनवलयितोत्तानहस्ताङ्गुलीभिः ।
किञ्चोच्चैरेकमात्रासमुदयिनि[12] लघौ घात एको निनादी
घात्यो मात्रार्धभाजि द्रुतवपुषि लघोरर्धना[13]देव घातः ।।

इति तालघातनप्रकारा[14]दयः सन्ति बाहुल्यभयान्नोक्ताः ।

---

[1] B गोलो [2] A लघुः [3] A प्लुताद्यन्तु [4] A संपर्क्के......
[5] B reads instead ताभ्यः कलाकलापश्चा...... [6] B ......मेतन्ते [7] B reads instead and ends with पताका इति प्रस्तारः [8] B कीरुताला...... [9] A सुनन्दा
[10] A त्रिकणतनुवहे (?) [11] A सशब्दः [12] A समुदयित...... [13] A ......रुर्द्धं......
[14] A ends simply with इति तालघातनप्रकारः

श्रीरङ्गो मान (मणि ?) बन्ध[1] कङ्कणर(?)हो मुक्तावलीमण्डनः
क्रीडाहेतुवसन्तरक्तहृदयो गन्धर्वलीलारतः।
साक्षान्मोक्षपतिश्चतुर्मुखनतो यो राजचूडामणिः
सोऽयं तालमयस्तृणेढु सकलं[2] संसारबन्धं हरिः ।।

अपि च

नन्दीशे (शा?)र्धतनुर्मुखे नव नवस्तच्चन्द्रबिम्बोदयः
कन्दर्पो नलकूवरश्च तुलितौ यस्याभिरूप्येऽतुले।
कण्ठान्तं किल कोकिलारवभरो बाहौ जयश्रीरहो
तालात्मा मुरजिच्छिनत्तु स तु नः संसारपाशावलीम् ।।

ख्यातो यः कविचक्रवर्तिपदतो विद्याचणैरञ्चितः
सौभद्रेयमिमं[3] यमर्जुनयशाः सोऽजीजनच्छ्रीधरः[4]।
तस्य श्रील-शुभङ्करस्य भणितौ सङ्गीतदामोदरे
तालाढ्यस्तवकोऽच्युतस्तवकृतौ यातस्तृतीयः पटुः ।।

इति तृतीयस्तवकः ।।

---

[1] B मुनिरत्न...... [2] A तृणवत् [3] A ......मिदं [4] A ......जनत् श्रीधरः

# चतुर्थस्तवकः

अथ श्रुतयः ।

नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना[1]
मातङ्गी सरसामृता मधुकरी मैत्री शिवा माधवी ।
बाला शार्ङ्ग[2]रवी कला कलरवा माला विशाला जया
मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्तिताः ॥
नान्दी विशाला सुमुखी विचित्रासम्भवः(?) सदा ।
षड्जो मतो मुनीन्द्रेण भरतेन शिवेन च ॥
चित्रा घना चालनिकानिवेशात्
संजायतेऽसौ ऋषभस्तथैव ।
स्वरोऽपि माला सरसा[3]निवेशाद्-
गान्धारनामा प्रथितः पृथिव्याम् ॥
मातङ्गी माधवी मैत्री शिवा जातस्तु मध्यमः ।
कला कलरवा बाला[4] शार्ङ्गरव्यास्तु पञ्चमः ॥
बालामृतारसानान्तु संयोगो[5] धैवतः स्वरः ।
जयामधुकरीभ्याञ्च निषादः परिकीर्तितः ॥
श्रुतिस्थाने स्वरान् वक्तुं नालं ब्रह्मापि तत्त्वतः ।
जले सुचरतां मार्गो मीनानां[6] नोपलक्ष्यते ।
गगने पक्षिणां यद्वत्तद्वत् स्वरगता श्रुतिः ॥
श्रुतिर्नादबला[7] प्रोक्ता तथाढ्या च कला मता ।
यथा तैलगतं सर्पिर्यथा काष्ठगतोऽनलः ।
ज्ञायतेऽत्रोपदेशेन[8] तथा स्वरगता श्रुतिः ॥
वीणादेस्तु श्रुतिज्ञानं स्वरज्ञानञ्च वंशजम् ॥
अश्विनौ वसवो रुद्राः सहैणाङ्केन[9] शुश्रुवुः ।
प्रशशंसु र्हरेर्नादमतो द्वाविंशतिः श्रुतिः ॥

---

[1] A घनाः [2] B साङ्ग...... [3] A सरशा...... [4] B मात्रा [5] C संयोगाद्
[6] A ......नान्नोपः...... [7] A नारदवला [8] B चोपदेशेन [9] A सहेनाङ्केन

अथ नायकस्य सचिवाः ।

नायकस्य गुणोत्कर्षकथका उपनायकाः[1] ।
वाचां भङ्गीषु चतुराः सखायः कार्यसाधने ।।
पीठमर्दो विटश्चैव विदूषक इति त्रिधा ।
नायकानुचरो भक्तस्तुल्यवेशपरिच्छदः ।।
पीठमर्द इति प्रोक्तः किञ्चिदूनश्च तद्गुणैः ।

यद्वा ।

कार्यमात्रे तु निर्वृत्तः प्रत्यग्देशात्[2] समागतः ।
मल्लिकागुच्छकोपेतः कलासु च विचक्षणः ।।
कलानामुपदेशेन गोष्ठीदेशे च साधयेत् ।
आत्मान[3] (?) मिति निर्दिष्टः पीठमर्दो मनीषिभिः ।।
वेशोपचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहयुतो वाग्मी चतुरस्रो विटो मतः ।।

परचित्तज्ञानमूहः, कर्तव्यताज्ञानमपोहः ।

यद्वा । वेशोपचारचातुर्यशीलो वेश्यासुहृद्विटः ।
तत्रस्थस्तद्[4]गुणोपेतः सदारो निःस्वतां गतः ।
गोष्ठ्या बहुमतो वाग्मी विटस्तदुपजीवकः ।।
हास्यप्रधानवाक्येन विनोदं प्रतनोति यः ।
नायकस्य सदा प्रीतो विदूषक इति स्मृतः ।।
यद्वा । अन्तःपुरचरो राज्ञां नर्मामात्यो विदूषकः ।*
हास्यलास्योपनर्तको विदूषक इति स्मृतः ।।
विद्यानामेकदेशज्ञो विश्वस्तो नीचखेलकः ।
विदूषकः स विज्ञेयो बहुहास्यसमन्वितः ।।
कुसुमस्य वसन्तादेर्नाम्ना कार्यो विदूषकः ।।

[1] A ......नायिकाः [2] A प्रत्यग्रे शान्त (?) C प्रत्यग्रेशाऽसमासतः (?)
[3] B आयान......(?) [4] B तत्र यस्तद्...... * A drops the next four lines.

तद्धितप्रत्ययान्तञ्च नाम तस्य विनिर्दिशेत् ।

यद्वा ।

असम्बद्धप्रलापी च सदा भ्रुकुटितत्परः ।
हासप्रहासचतुरो[१] वाचालो नृत्यकोविदः ।।
कुरूपश्च सुवेशश्च[२] प्रस्तुतार्थप्रबोधकः ।
वृद्धा[३]कृतिर्यष्टिपाणिः सूत्रधारो विदूषकः ।।

एतेऽमात्याः प्रायेण दूतकर्माणि कुर्वन्ति, अतो दूतलक्षणमपि व्याचक्ष्महे ।

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
निगूढार्थश्चतुर्धा[४] तु दूता दूत्योऽपि तत्समाः ।।
उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थः[५] स उच्यते ।।

यद्वा ।

धीरः स्थिरमतिः शूरः स्वामिकार्यविधायकः ।
स्वपौरुषप्रकाशी च निसृष्टार्थः स उच्यते ।।*

प्रागुक्तो हनुमानिव ।

मितार्थं भाषते वाक्यं बीजं कार्यतरोरिव ।
भावं पल्लवयत्याशु मितार्थः सोऽभिधीयते ।।
सन्देशं हरते यस्तु यावद्वाचिकमात्रकम् ।
नापरं किमपि ब्रूते स स्यात् सन्देशहारकः ।।
यथोक्तं यो वदत्यर्थं समासादुभयोरपि ।
कार्यजाते मुनीन्द्रेण प्रोक्तः सन्देशहारकः ।।
उद्देश्यकार्यबाधेन[६] विपक्षे नायके स्वयम् ।
वैरमुद्धरते यस्तु निगूढार्थः स उच्यते ।।
अलं शीलमलं रूपमलं कुलमलम्मतिः[७] ।
यो यत्र कुशलः कार्ये स योज्यो दूतकर्मणि ।।
देशकालाद्यपेक्षस्तु व्यवहारोऽत्र सिध्यति ।
एते मनोऽभिलषितं साधयन्ति मधुद्विषः ।।

---

[१] B ......चटुलो   [२] B कुवेशश्च   [३] AC बद्धा......(?)   [४] A निगूढार्थश्च शुद्धा (?)
[५] A विसृष्टार्थः   * B reads after this the verse beginning with अलं शीलं and omits the verses in between.   [६] C ......कार्यबाधे च   [७] C ......कुलमपूर्वजं

अथ कलाः ।

अञ्जनं शुद्धसिन्दूरं पत्रावल्यथ यावकः ।
ताम्बूलरागोऽप्यलकाः केशान्तः पट्टगुच्छकः[१] ।।
पटवास[२]श्चित्रपटः कटकं रत्नमुद्रिका ।
मुक्ताहारः कङ्कणकं ग्रैवेयकमथाङ्गदम् ।।
सैमन्तिकन्तुलाकोटिः कुण्डलं कर्णचूलिका[३] ।
विशेषकोऽवतंसश्च काञ्चीकञ्चुलिकादयः ।
सन्ति यावच्चतुःषष्टिमपराश्च सुविस्तराः ।।
कलाः कलावतीनान्तु हरेर्हृदयहारिकाः ।
ता बाहुल्यभयान्नोक्ता नानुयोज्यास्ततो वयम् ।।

यद्वा ।

चुम्बनालिङ्ग[४]ने बन्धो दन्ताहतिनखक्षते ।
कराकर्षो मुखरतं (?) द्रावो (?) मर्दनमण्डले[५] (?) ।
रतञ्चेत्यादि बहुला वात्स्यायनमताः कलाः ।।

अथ वाद्यानि ।

तालेन राजते गीतं तालो वादित्रसम्भवः ।
गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते ।।
ततं शुषिरमानद्धं घनमित्थं चतुर्विधम् ।
ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा ।
चर्मावनद्ध[६]मानद्धं घनं तालादिकं मतम् ।।

तत्र ततं यथा ।

अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी ।
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ।।
हस्तिका कुब्जिका कूर्मो सारङ्गी परिवादिनी ।
त्रिशरी शततन्त्री च नकुलौष्ठी च चंसरी[७] (?) ।।
औडुम्बरी पिणाकी च निबन्धः सुङ्कल[८]स्तथा ।
गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः ।
कवि (?) लासो मधुस्यन्दी घोणेत्यादि ततं भवेत् ।।

---

[१] A पट्टगुतुलकाः (?) [२] A पटवासा...... [३] A ......चूडिका [४] B ......चिङ्गने (?) श्लेषो [५] B ......हासने (?) [६] A चर्मानवद्ध...... [७] A टंसरी [८] B शुष्कल......

अलावनी यथा ।

कनिष्ठिकापरिध्यर्ध[१]मध्यच्छिद्रेण संयुतः[२] ।
दश[३]मुष्टिमितो दण्डः खादिरो वैणवोऽथवा[४] ।।
अधःकरभवानूर्ध्वे छत्रावल्यभिशोभितः ।
नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्धसन्निभाम् ।।
निवेश्य चुम्बिकां तत्रालावुखण्डं निवेशयेत् ।
द्वादशाङ्गुलविस्तारं दृढं पङ्कं[५] (?) मनोहरम् ।।
तुम्बिकावेधमध्येन दण्डच्छिद्रे तु निर्मिताम् ।
अलावुमध्यगां डौवीं[६] कृत्वा स्वल्पाञ्च[७] काष्ठिकाम् ।।
तथा सम्बेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत् तदा ।
यथा स्यान्निश्चलालावुर्बन्धश्च[८] करभोपरि ।
पञ्चाङ्गुलिञ्च[९] संत्यज्यालावूं स्वल्पाञ्च बन्धयेत् ।।
कोशान्त[१०]निर्मिता पट्टमयी सूत्रकृताथवा ।
समाः (?) सूक्ष्मा दृढा तत्र तन्त्रीर्देया विचक्षणैः ।।
एतल्लक्षणसंयोगिन्यलावणी[११] प्रकीर्तिता ।।
बिन्दुनादसमुत्पन्नां तुम्बीं[१२] निक्षिप्य वक्षसि ।
मध्यमाऽनामिकाभ्याञ्च वाद्या दक्षिणपाणिना ।।
तारे मन्द्रे च घोरे च त्रिस्थाने बिन्दुरिष्यते ।
तुम्बीमूलं समुत्पत्य वामाङ्गुष्ठेन धारयेत् ।
ततस्ताभिस्तु[१३] सर्वाभिः स्वरव्यक्तिर्विधीयते ।।
त्रिस्वरो दक्षिणः पाणिर्वामस्तत्र चतुःस्वरः ।
अलावन्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः ।।
रागव्यक्तिर्यथा गात्रे भवेत् षड्जादिभेदतः ।
अंशन्यासविभेदाच्च तथाऽत्रापि विधीयते ।।
इयमलावणी (नी ?) प्रोक्ता मनःश्रवणरञ्जनी ।
प्रत्यक्षा शारदा[१४] देवी वीणारूपेण संस्थिता ।।

इत्यलावनी ।।

अन्येषां लक्षणं विस्तरभयान्नोक्तम् ।

---

[१] B .....पराध्यर्द्ध..... [२] B संयतः [३] B सप्त...... [४] B वैणवस्तथा [५] A दृढपङ्क......
[६] B डोवीं [७] A सम्माञ्च(?) [८] A बद्धश्च [९] A पञ्चाङ्गुलिषु [१०] A कंशान्त......

शुषिरं यथा ।

वंशोऽथ पारी मधुरी तित्तिरी शङ्खकाहला ।
तोडही मुरली वुक्का शृङ्गिका स्वरनाभयः ।।
शृङ्गं कापालिक[1]वंशश्चर्मवंशस्तथापरः ।
एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः ।।
वर्तुलः सरलश्चैकपर्वा दोषविवर्जितः ।
वैणवः खादिरो वाऽपि रक्तचन्दनजोऽथवा ।।
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽथवा[2] ।
राजतस्ताम्रजो वाऽपि पैत्तलो रङ्गजो[3]ऽथवा ।।
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोधितः ।
शिल्पविद्याप्रवीणेन वंशः कार्यो मनोहरः ।।
वंशो नैवमतोऽपीति[4] (?) मतङ्गमुनिनोदितम् ।
ततोऽन्ये[5]ऽपि तदाकारा वंशा एव प्रकीर्तिताः ।।
अत्र त्यक्त्वा[6] शिरोदेशादधोद्विमितमङ्गुलम् ।
फुत्काररन्ध्रं कुर्वीत मितमङ्गुलिपर्वणा ।।
पञ्चाङ्गुलानि संत्यज्य ताररन्ध्राणि कारयेत् ।
कुर्यात्तत्रान्यरन्ध्राणि सप्त संख्यानि कौशलात् ।।
वदरीबीजतुल्यानि संत्यज्यार्धार्धमङ्गुलम् ।
प्रान्तयोर्बन्धनं कार्यं स्वर्णाद्यै[7]र्नादहेतवे ।।
सिक्ककेन[8] कला देया तेन सुस्वरता[9] भवेत् ।।
पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुल[10]वृद्धितः ।
षडङ्गुलानि नाम्ना स्याद् यावदष्टादशाङ्गुलम् ।।
फुत्कारताररन्ध्रस्य यावदङ्गुलमन्तरम् ।
तदेव नाम वंशस्य वांशिकैः परिकीर्त्यते ।।
एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः ।
श्रुतितारतरत्वेन वांशिकैः समुपेक्षितः ।।

---

[1] B कापालिकं [2] B ......ऽपि वा [3] A लौहजः स्फाटिको...... [4] B वंशो नान्यो मतोऽपीति [5] B ततोऽन्यो...... [6] A तत्र त्यक्त्वा...... (?) [7] A स्वराद्यै...... [8] B सिक्खकेन [9] A सुन्दरता [10] B ......ङ्गुलि......

त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः ।
निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः ॥
महानन्दस्तथानन्दो विजयोऽथ जयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः ॥
दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः ।
द्वादशाङ्गुलमानस्तु विजयः परिकीर्तितः ॥
चतुर्दशाङ्गुलमितो जय इत्यभिधीयते ।
ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः ॥
नैबिडच्यं प्रौढता चापि सुस्वरत्वञ्च शीघ्रता ।
माधुर्यमिति पञ्चामी फुत्कृतेषु गुणाः स्मृताः ॥
शीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः ।
अमधुरश्च विज्ञेयाः षड्दोषाः फुत्कृते क्रमात् ॥
बहुकृत्वः शिरःकम्पः स्वस्थानाप्राप्तिरेव च ।
वृथाप्रयोगबाहुल्यमल्पता गीतवादने ।
एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको मतः ॥
स्थानकादिलयाभिज्ञो गमकाढ्यः स्फुटाक्षरः ।
शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते ॥
[1]प्रयुक्तिरर्धयुक्तिश्च युक्तिश्चेत्यङ्गुलेर्गुणाः ।
स्वस्थानत्वं सुस्वरत्वमङ्गुलीसारणक्रिया ॥
समस्तगमकज्ञानं रागरागाङ्गवेदिता ।
क्रियाभाषाविभाषासु दक्षता गीतवादने ॥
स्वस्थाने चापि दुःस्थाने नादनिर्माणकौशलम् ।
गातॄणां स्थानदातृत्वं तद्दोषाच्छादनन्तथा ।
वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः ॥

इति वंशः ।

काहला स्त्रीलिङ्गः[2] । भोडही[3] मुरली वुक्का इत्येताश्च[4] स्त्रियां सप्तस्वराणां नाभिरिव स्वरनाभिः स्त्रियां वर्तते[5]। इतरेषां लक्षणं विस्तारभयान्नोक्तम् ।

---

[1] B विमुक्तिरर्द्धमुक्तिश्च मुक्ति...... C प्रमुक्तिरर्द्धमुक्तिश्च मुक्ति...... [2] C स्त्रीनिषङ्गः
[3] C तोडही [4] AC इत्येते च [5] A प्रवर्तते

आनद्धं यथा ।

आनद्धे[1] मर्दलः श्रेयानित्युक्तं भरतादिभिः ॥

अपि च—

मुरजपटहढक्काबिम्बकोदर्पवाद्यं
पणवघनसरुञ्जालावजाक्ष[2]स्त्रिवल्यः ।
करठकमठभेरी स्यात् कुडुक्काढुडुक्का[3]
धनसमुरलिझल्लीदुक्कलीदौण्डिशालाः ॥
डमरुटमकिमड्डुः कुण्डलीगुञ्जनामा
रणमभिघटवाद्यं दुन्दुभी चावजश्च ।
क्वचिदपि ढुढुकी स्याद् दर्दुरं चाप्युपाङ्गं[4]
प्रकटितमवनद्धं वाद्यमित्थं जगत्याम् ।
त्रिपुरमथनकर्तुस्ताण्डवेऽथ प्रयाने[5] ॥

मर्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः ।
रक्तचन्दनजो रम्यो गम्भीर[6]ध्वनिरुच्चकैः ॥
सार्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते ।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ॥
दक्षिणञ्च भवेद्धीनमेकेनार्धाङ्गुलेन वा ।
करेणानद्धवदनो[7] मध्ये चैव पृथुर्भवेत् ॥
षण्मासीयो मृतो वत्सस्तच्चर्मकरणं मतम् ।
मृत्तिकानिर्मितश्चैव मृदङ्गः परिकीर्तितः ॥
पातयेत् खरलिं[8] वाद्यवादनार्थञ्च मर्दले ।
विभूतिर्गैरिकं भक्तं काञ्जिकेन[9] च संयुतम् ॥
यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम् ।
सर्वमेकत्र पिष्टन्तल्लेपः खरलिरुच्यते ॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे ।
एवं मर्दलकः प्रोक्ताः सर्ववाद्योत्तमोत्तमः ॥
अस्य संयोगमासाद्य सर्वं वाद्यञ्च शोभते ।
एतदङ्गं बीजकाष्ठे दलमर्धाङ्गुलं विदुः (?) ॥

---

[1] AB आनद्धो [2] C ......लावजाङ्ग ...... [3] C कुडुक्काहुडुक्का [4] AB दर्दुरंश्चाप्युत्तमाङ्गम् (?) [5] C तत्प्रमाणे [6] A गभीर...... [7] A करणानद्ध...... [8] B खेरलि A स्वर्णि (?) [9] A केन्दुकेन

तधिधौ[1]डमिति पाढ[2]वर्णा मृदङ्गजाः ।
खोङ्गटोधिक्कटस्तद्धीताकद्ं दं थोगं धिधि ।।
थर्झांझि नं गटं दंथा कुटपाढा मता अमी ।
तथिथोटेतक्कधीदों दं दं धिग्गां तं तं तधि ।
तक्कतधं धिदों तधि पाटखण्डे द्वयं क्रमः ।।

तथा च यतिमाने पाट[3]खण्डः ।

द्रगड्धेजां द्रगड्धेजां धो धो धिकाता ।
धिकाता कडता धिका थोजां थोजां थोजां[4] ।
ताकड ताधिक थो ता द्रगड ता धि धि ।
धि धि क ट ता कड नाधो धिक थोजां धो धिक थोजाम् ।।
धोता द्रगडता द्रगडता द्रगडता धि ।

इति यतिमानपाटखण्डः ।

यतिरोडो(?)ऽप्यवच्छेदो गजरो रूपकं ध्रुवम् ।
गलपः सारिगोणी च नादश्च कवितं तथा ।
प्रहरणं छन्दनञ्च प्रबन्धा द्वादश स्मृताः ।।

यथा—दंथात इत्येकताल्यां यतिः । तुडवाद्यं यथा—दां तथो तधिक् तधिक् तकि धिक धिक दंथा २ थोगि २ तत्त २ थवि२ दिग्नं २ टटुलकि २ तदटकु २ थरटकु २ डगि नगि २ दां २ दं २ दीं दां दं दाततथा इत्येकवाद्यम् ।

अवच्छेदवाद्यं यथा—दंथातः धि धि क्कि दिग्गां दं थातः । इत्यवच्छेद-वाद्यम् ।

गजरवाद्यं यथा—थोकटेञ् नेञ्टें डें गथो गथोङ्गं टेङ्गथोग । तकि २ धिक २ तथोक २ टेङ्गा धि धि कट तक धोक तधिकट तक्कक तथो गतङ्गीम् इत्येकताल्यां गजरः ।

रूपकवाद्यं यथा—तकधिक तकधिक्कि थरितकि थरितक्कि धिकक्क तकक्क दंथातः इति रूपकवाद्यम् ।

ध्रुवकवाद्यं यथा—तक्क तक्कट धिक्क धिक्कट इति निःसारुताले ध्रुवकः ।

गलपो यथा—तधिद्धि धिक तक तधि गल गं था । दें क थ था दें थो टेञान इत्येकताल्यां गलपः ।

---

[1] B तधिधोढ़...... [2] A पाट...... [3] B omits पाट [4] B omits one थोजा

सारिगोणी यथा—थोङ्गः ट ञ तक्क धिक्क तकधिक् तक थो हृटङ्गन २ थोग क्कथोः इति प्रथमखण्डः ।

टेञयोः धिथोहृः टेञ २ दक्कडदगक्क धिक्क तकिक दक्क दं गदं गथोग २ तक्क तक्क २ धिकत धित्तक धोटेञ २ ध टे गन थोग २ थो ग क्क थोः इति द्वितीयखण्डः ।

टेञथो हृटगें २ टे ञ इत्यस्य छन्दनं[1] थेद्धिट देङ्गना धिकगं ण धि थ थ रिगड दगडः थोगट तक्क २ थोक्क धिगट तद्धितक इति तृतीयखण्डः ।

कथो हृक ट गेधिक टेग २ थोहृट गें २ थो हृ ट ञ इत्यस्य छन्दनम् ।

इति सारिगोणी ।

नादो यथा—दाङ्कारत्रितयं पूर्वं दां धिगिति ततस्त्रयम् ।
दां दां धिकत्रयं यत्र इति नादः शचीप्रियः ।। इति नादः ।

द्रुतमान[2]समारब्धं शुद्धं कूट[3]विनिर्मितम् ।
सप्तखण्डमयं वाद्यं कवितन्तदिहोच्यते ।।

द्रुतमानत्वात् प्रतिताले यथा—तत्ततत्ततस्तततक्कि २ दिदं धिग न थो २ धिक्क धिक धिक्क धिक्क धिक नगि नग मिथो थो धि धि धिः दां धिक्कथो २ नञि थो २ थोहृ २ डेटि २ थोहृ २ ताट २ तट्टुकग्गों २ धगि २ ततदधि ग नितत दगि ञों ञडीथो गथो गथों थोग्या थोग थोतत्ताताः ।

इति सप्तपदान्याहुः कवितं वाद्यपण्डिताः ।
प्रतितालेन तालेन पाटवर्णसमासतः ।।
गन्धर्वपतिना पूर्वमुर्वशीलास्यनर्तने ।
स्वधर्मारञ्जनार्थञ्च कवितं प्रकटीकृतम् ।।

प्रहृरणं यथा—थोगक्का तद्धिक थोगक ग ट गों दं थो ग दिद्धिक धिक्क धिकटेञ इत्येकताल्यां प्रहृरणम् ।

वाद्यं विमुच्यते येन छन्दनं तन्निगद्यते ।
यथा—तद्धिथो दिञ टे ञ ततः ।

इति छन्दनम् ।

कलासो द्विकलासश्च टाकली चार्धटाकली ।
जोलाटा कलिका चैव गोमूत्री मुरजस्तथा ।।

---

[1] A stops here and omits the rest, concluding with इति सारिगोणी

[2] B द्रुतमानं [3] B शुद्धकूट......

**पलमानो दण्डमानो वादिविद्याबलान्वितः ।**
**धूमकेतुरिति प्रोक्ता दश वादा मनोहराः ।।**

जोलाटा कलिका[1] इत्येको वादः । वादिविद्याबलधूमकेतुरित्यपरो वादः । पाटवर्णे (र्णै ? ) रतिविषमा एते दश वादा मार्दङ्गिकैर्वादनीया इत्यर्थः । लक्षणञ्च बाहुल्यभयान्नोक्तम् ।

**संयोगास्त्रय एव स्युर्मृदङ्गिरङ्गदायिनः ।**
**लघुपूर्वो गुरुपूर्वः प्लुतपूर्व[2] इति स्मृताः ।। इति संयोगत्रयम् ।**

**अट्टिताख्या विकृष्टा च गोमुख्यालप्तिका तथा ।**
**वादनस्य चतुर्मार्गा[3] ईरिताश्चन्द्रमौलिना ।।**
**अट्टिता करमूलस्य विकृष्टाङ्गुलिमूलतः ।**
**गोमुखी चाग्रहस्तस्य चालनेन प्रदर्शिता[4] ।।**
**कनिष्ठाङ्गुष्ठयोगेन सर्वाङ्गुलिविवर्तनात् ।**
**आलप्तिका समाख्याता नन्दिने चन्द्रमौलिना ।। इति वादमाहुः ।**

**ग्रहो मोक्षः स्वसन्धानमित्युक्तञ्च गतत्रयम् । इति गतत्रयम् ।**

**निगृहीतार्धनिगृहीतमुक्ताख्यञ्च मृदङ्गजम् ।**
**प्रहारत्रितयं प्रोक्तं नन्दिने चन्द्रमौलिना ।।**
**करयोः पुटयोगेन निगृहीतमुदाहृतम् ।**
**स्यादर्धनिगृहीतन्तु करस्यैकस्य मोक्षणात् ।।**
**उभयोश्च परित्यागात्तयैवान्तरघाततः ।**
**क्षणे क्षणे कराघाते[5] मुक्ताख्यः स उदाहृतः ।। इति प्रहारत्रयम् ।**

**वादिको मुखरिश्चैव प्रतिमुखरिरेव च ।**
**लया (यो ?) गीतानुगश्चेति पञ्च मार्दलिका मताः ।।**
**धीरो वाद्यविशारदः प्रवचनः (न ?) पाठाक्षरव्यञ्जक-**
**स्तालाभ्यासरतः समस्तगमकप्रौढिप्रकाशक्षमः ।**
**नानावाद्यविवर्तनर्तनपटुः स्वभ्यस्तगीतक्रमः**
**सन्तुष्टो सुखवादको द्रुतकरो मार्दङ्गिकः कीर्तितः ।।**
**इति मार्दङ्गिकलक्षणम् ।**

इतरेषामानद्धवाद्यानां लक्षणं बाहुल्यभयान्नोक्तम् ।

---

[1] B जोलाटी कणिका [2] A गुरुः पूर्वः प्लुतः पूर्व [3] A चतुर्मार्गो [4] A प्रदर्शिताः
[5] A कलासश्च ?

अलावुजवाद्यं पृथक्[1]। मुरलिरिति पञ्चमान्तः[2] (?)। दुक्कनी वाद्यविशेषः। टमुकिश्च[3] वाद्यविशेषः। आवजवाद्यं म्लेच्छदेशवाद्यम्[4]। मर्दलस्त्रयोदशाङ्गुलवाममुखो द्वादशाङ्गुलदक्षिणमुखः। मुरजस्तु अष्टाङ्गुलवाममुखः सप्ताङ्गुलदक्षिणमुखः। मर्दलमुरजयोरयं भेदः।

घनं यथा।

अनुरक्तं विरक्तञ्च द्विविधं घनवाद्यकम्।
गीतानुगमनुरक्तं विरक्तं तालसंश्रयम्॥
करतालः कांस्यबलो जयघण्टा[5]ऽथ शुक्तिका।
कण्ठिका[6] (?) पदवाद्यञ्च पट्टातोद्यञ्च घर्घरम्॥
झञ्ज[7]तालश्च मञ्जीरः कर्तुर्युङ्गुर (?) इत्यपि।
द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञकाः॥
त्रयोदशाङ्गुलव्यासौ शुद्धकांस्यविनिर्मितौ।
मध्यमुखौ स्तनाकारौ तन्मध्ये रज्जुगुम्फितौ॥
पद्मिनीपत्रसदृशौ कराभ्यां रज्जुयन्त्रितौ।
करतालावुभौ वाद्यौ पाटैर्झनटकै[8] (?) रिति॥
यद्वा। त्रयोदशयवव्यासं वक्रतुण्डे[9] यवोन्मितम् (?)।
यवपञ्चकगम्भीरं मध्ये च यवसप्तकम्॥
विस्तृतं[10] वर्तुलं निम्नं यवत्रयमितं ततः।
पृष्ठतो मध्यदेशे च शिवलिङ्गसमाकृतिम्॥
मध्ये[11] गुञ्जासमच्छिद्रं पट्टसूत्रादिगुम्फितम्।
अत्यम्लपैष्टी[12] (?) निर्दग्धशुद्धकांस्यविनिर्मितम्॥
संरक्ताङ्गुल[13]सुस्निग्धसुदीर्घमधुरध्वनिम्।
घनानुसारसंयुक्तं दृढं शुद्धं[14] मनोहरम्॥
काश्मीरादिसमुद्भूतं तालमाहुर्मनीषिणः।
सुनादं दक्षिणं तालं ततो हीनञ्च वामकम्॥

---

[1] A अलावुजवाद्यं यथा [2] B सुवणि (?) रिति टवर्गपञ्चमान्तः [3] A टुमकिश्च
[4] A आनाब्जवाद्यं म्लेच्छवाद्यम् [5] A जयघन्टो...... [6] B कश्लिका (?)
[7] B झर्झ..... [8] AB पाटैर्झनटकटे...... [9] C वक्रपिन्टे B वक्रपिण्डे [10] A विमृतं
[11] A मध्य...... [12] B अत्यम्लपेषी [13] B ......ङ्गुलि...... [14] B शुभ्रं

कुर्वीत तद्द्वयं[1] धार्यं तर्जन्यङ्गुष्ठयोगतः ।
वामहस्तस्थतालस्य मध्यमं झञ्झिनादितम्[2] ।।
तिर्यग्दक्षिणतालस्य परिध्यंशेन तालयेत् ।
तालादौ[3] वादयेच्चैव प्लुतदीर्घलघुद्रुतैः ।। इति करतालविशेषः ।

कर्तरी घनविशेषः । डङ्गुरश्च घनविशेषोऽदन्तरेफान्तः पुंलिङ्गः । अन्येषां लक्षणं विस्तारभयान्नोक्तम् ।

रुक्मिण्याः सत्यभामायाः कालिन्दीमित्रविन्दयोः[4] ।
जाम्बवत्या नाग[5]जित्या लक्ष्मणाभद्रयोरपि ।।
कृष्णस्याष्टमहीषीणां पुरोद्वाहमहोत्सवे ।
ततं शुषिरमानद्धं घनञ्च युगपज्जनाः ।
अवादयन्नसंख्यातमिति पौराणिकी श्रुतिः ।।
ततं वाद्यन्तु देवानां गन्धर्वाणाञ्च शौषिरम् ।
आनद्धं राक्षसानान्तु किन्नराणां घनं विदुः ।।
निजावतारे गोविन्दः सर्वमेवानयत् क्षितौ ।
यावन्ति वाद्यभाण्डानि रामरावणयोर्युधि ।
तावत्यो नाभवन् सेनाः कुरुपाण्डवसङ्गरे ।।

किञ्च—

[6]निलिम्पहृत्कम्पनतोमरेण रणे मुरारेर्मधुनाऽसुरेण[7] ।
अभूत् ततांद्यैरपि सिंहनादैः सा पञ्चशब्दीति कणादवादैः (दः ?) ।।

तातादिभिरेतैश्चतुर्भिर्वाद्यैश्चमूनां सिंहनादैश्च पञ्चशब्दीति वाद्यमभूत्[8] । सिंहनादेन सह वाद्यं पञ्चविधं[9] भवतीत्यर्थः ।

अथ मात्राः ।

प्लुतगुरुलघुद्रुतरूपाश्चतस्रो मात्रा भवन्ति ।

प्लुतस्त्रिमात्रिको ज्ञेयो द्विमात्रो गुरुरुच्यते ।
एकमात्रो लघुः प्रोक्तो द्रुतं स्यादर्धमात्रिकम् ।।
राधाह्वाने प्लुतो जातो[10] गुरुः शशिकलाकृतिः[11] ।

---

[1] B द्वितयं　[2] C सन्निनादितम् B मध्यमीषद्विनामित　[3] A तालाङ्गो B तालाद्वैर्वादि.....
[4] A ......विद्धयोः　[5] A नाग्नि......　[6] B निलिम्पकृत्कम्पनकृत्स्वरेण युद्धे.....　[7] A मधुना स्वरेण　[8] C adds further युद्धे सैन्यानां यो हुङ्काररवः स सिंहनादः　[9] A चतुर्विधं　[10] B जातौ　[11] B ......कृते

लघुः कनकरेखायां पारिजाते द्रुतोदयः ।
एवं साङ्केतिके वेणौ कृष्णस्यासन् प्लुतादयः ।।

अथाङ्गहाराः ।

अङ्गहारोऽङ्गविक्षेप इति सर्वमुनेर्मतम् ।
अङ्गविक्षेपणार्थत्वादङ्गचेष्टा[1] निरूप्यते ।।
अब्ज[2]शब्दो यथा पद्मशङ्खादौ[3] रूढियौगिकः ।
तथा[4]ङ्गहारशब्दोऽपि स्वपरग्राहको मतः ।।
अथाङ्गानामुपाङ्गानां प्रत्यङ्गानां निरूपणम् ।।

अङ्गानि यथा ।

शिरः करोऽथ हृदयं जठरं पार्श्वयुग्मकम् ।
कटिश्चेति षडङ्गानि कथितानि शरीरिणाम् ।।

शिरो यथा ।

आकम्पितं कम्पितञ्च धूतं विधूतमेव च ।
परिवाहितमाधूतमवधूतं तथाञ्चितम् ।।
निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम् ।
लोलितं प्रकृतञ्चेति चतुर्दशविधं शिरः ।।

करो[5] यथा ।

असंयुताः कियन्तोऽपि कियन्तः संयुताः[6]परे ।
नृत्यहस्ताः कियन्तः स्युरित्थं हस्तास्त्रिधा मताः ।।
हस्तेनैकेन कर्माणि येषां ते स्युरसंयुताः ।
येषां हस्तद्वयेनैव कर्माणि ते तु संयुताः ।।
नृत्यमात्रस्थिता ये तु न किञ्चिद्वस्तुवाचकाः ।
अङ्गहारेण सहिता नृत्यहस्तास्तु ते मताः ।।

तत्रासंयुता[7] यथा ।

पताकः पद्मकोषश्च हंसास्यः कर्तरीमुखः ।
अलपद्मस्त्रिपताको[8] मुष्टिकः शिखरस्तथा ।।

---

[1] A अङ्गविक्षेपणार्थ द्वादशाङ्गचेष्टा...... [2] C अङ्ग...... [3] B शंखपद्मादौ
[4] C drops तथा [5] AC करौ [6] A drops विसर्ग [7] A असंयुतो
[8] C ......पत्राको

अर्धचन्द्रः सर्पशिराः सूच्यास्यः[१] खटकामुखः ।
अरालः शुकतुण्डश्च सन्दंशः काङ्गुलस्तथा ॥
ऊर्णनाभोऽपि कथितः कपित्थो मृगशीर्षकः ।
हंसपक्षस्ताम्रचूडश्चतुरो मुकुलस्तथा ॥
भ्रमरश्च कदम्बश्च कृष्णसारमुखाह्वयः ।
पोनिको[२]ऽप्यथ सिंहास्योऽङ्कुशस्तन्त्रीमुखस्तथा ।
इत्येते कथिता हस्ता मता[३] स्त्रिंशदसंयुताः ॥

संयुता यथा ।

गजदन्तः कपोतश्च वर्धमानोऽञ्जलिस्तथा ।
निषधः कर्कटश्चैव तथोत्सङ्गोऽवहित्थकः ॥
स्वस्तिको मकरो दोलस्तथा पुष्पपुटाभिधः ।
मरालनामा च तथा खटका वर्धमानकः[४] ।
चतुर्दशेति कथिताः संयुता हस्तका अमी ॥

नृत्यहस्ता यथा ।

केशबद्धो[५] नितम्बश्च रेचितोऽप्यर्धरेचितः ।
चतुरस्रस्तथोद्वृत्तः पल्लवः पक्षरञ्चितः ॥
लतानामालनमुखः स्वस्तिको विप्रकीर्णकः ।
आविद्धवक्त्रः शूच्यास्योऽप्यरालखटकामुखः[६] ॥
वक्षोमण्डल्यथैका स्यादुरः पार्श्वार्धमण्डली ।
पार्श्वमण्डल्यथ भवेदूर्ध्वमण्डल्यथापरा[७] ॥
मुष्टिकः स्वस्तिकश्चापि पक्षप्रद्योतकस्तथा ।
करिहस्तो दण्ड[८]पक्षस्तथा गरुडपक्षकः ॥
अलपद्मोन्नतश्चैव भवेदुत्तानरेचितः ।
नलिनी पद्मकोषश्चेत्यमी च सप्तविंशतिः ।
नयनानन्दजनना नृत्यहस्ता मयोदिताः ॥
असंयुताः संयुताश्च नृत्यहस्ताश्च ये मताः ।
मिलित्वा लिखितैरेतैरेकसप्ततिहस्तकाः ॥

---

[१] C सूचास्यः [२] B मोलिको (?) [३] C मया [४] C बद्धनामकः [५] B ......वल्वो
[६] C ......मयः [७] AC ......परः [८] C मण्ड (?)

[1]एतेषामेकसप्ततिवनितानां लक्षणं ममैव हस्तमुक्तावलीग्रन्थे ज्ञातव्यम् ।

तत्र पताको यथा ।

जले जगति लज्जायां संख्यायां रूपके वने ।
नूपुरे च रणे मौलौ भाले ध्याने च भूषणे ।। (?)

[2]एवमादिष्वनेकेषु विषमेषु पताको वर्तते, दिङ्मात्रमिदं दर्शितम् । किञ्च एतेषां[3] सर्वेषां हस्तकानां विषयलक्षणानि कोटिपद्मार्बुदमहापद्मपरार्धसंख्यावच्छिन्नानि । तेषु निरुच्यमानेषु ग्रन्थबाहुल्यं जायते । अतो मत्कृतहस्तमुक्तावल्यां सकलानि विशेषतो बोद्धव्यानि बुद्धिमद्भिरिति ।

हृदयं यथा ।

समं निर्भुग्नमाभुग्नं कम्पितोद्वाहिते तथा ।
हृदयं पञ्चधा ज्ञेयं नृत्यकर्मणि कोविदैः ।।

जठरं यथा ।

समं पूर्णं तथा क्षाममतिक्षामं तथैव च ।
रिक्तपूर्णं भवेदत्र जठरं पञ्चधा मतम् ।।

पार्श्वयुग्मं यथा ।

समं समुन्नतञ्चैव नतञ्चापि प्रसारितम् ।
निर्वातित[4]ञ्चापसृतं षड्विधं पार्श्वयुग्मकम्[5] ।।

कटिर्यथा ।

समा छिन्ना विवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहिता चेति कटिः षड्विधा परिकीर्तिता[6] ।

उपाङ्गानि यथा ।

केशः[7] स्तनश्च धम्मिल्लो ललाटं भ्रूयुगं तथा ।
चक्षुःकोणस्तथा नेत्रं तारा[8]दृष्टिश्च दर्शनम् ।।
शङ्खकर्णौ हनुर्नासा कपोलौष्ठौ रदा अपि ।
जिह्वा निःश्वास(?)चिबुकं मुखं तद्राग एव च ।।
ग्रीवा चेति त्रयोविंशत्युपाङ्गानि विदुर्बुधाः ।।

एतेषूपाङ्गेषु एकैकमप्यनेकप्रकारं भवति ।

---

[1] B omits the line [2] B reads instead एवमादिलक्षणं नात्रोक्तं ग्रन्थबाहुल्यभयात्
[3] C तेषां [4] B निकुञ्जित...... [5] AC ......मुच्यते [6] A षड्विधाः परिकीर्तिताः
[7] B भ्रुकुटि [8] C भावा (?)

प्रत्यङ्गानि यथा।

स्कन्धो बाहुः कूर्परश्च मणिबन्धः कराङ्गुली।
ऊरू जानू च जङ्घा च चरणश्च तदङ्गुली ॥
प्रत्यङ्गानि दशैतानि कथितानि मनीषिभिः।

एतेषु प्रत्यङ्गेषु एकैकमप्यनेकप्रकारमिति।

स्थानकानि तथा चारी[१] करणं मण्डनं[२] तथा।
अङ्गहारश्च भरते नृत्याङ्गं पञ्चधा मतम् ॥

तत्र स्थानकानि यथा।

संहतं समपादञ्च स्वस्तिकं वर्धमानकम्।
नन्द्यावर्तं चतुरस्रं पार्ष्णिविद्धं ततः[३] परम् ॥
एकपार्श्वगतं तस्मादेकजानुगतं[४] ततः।
परावृत्तं ततः प्रोक्तं पृष्ठोत्तानदलन्तथा ॥
एकपादं ततो ब्राह्मं वैष्णवं गारुडं ततः।
शैवं वृषभासनञ्च पार्ष्णिपार्श्वगतं तथा ॥
समसूची विषमसूची खण्डसूची[५] विशाखकम्।
जातं वैतानसंकुण्डलमालीढं प्रत्यालीढकम् ॥(?)
अर्धमण्डलमूर्ध्वासनन्तथैव कमलासनम्।(?)
जानुर्वाततकं तस्मान्माण्डूकं दार्दुरं ततः[६]।
स्थानकानि त्रयस्त्रिंशदेतान्युक्तानि सूरिभिः ॥

चारी यथा।

नहि चारीं विना नृत्ये नृत्यस्याङ्गं प्रवर्तते।
शृङ्गारादिरसानान्तु भावोद्दीपनकारिका[७]।
माधुर्योद्वर्तनान्नृत्ये चारी चारुगतिर्मता ॥

अन्ये तु—

एकपादप्रचारो यः सा चारीति निगद्यते।
पादयोश्चरणं[८] यच्च करणं तन्निगद्यते ॥
करणानां समायोगः खण्डकः परिकीर्तितः।
त्रिभिः खण्डैश्चतुर्भिर्वा मण्डलं समुदाहृतम् ॥

---

[१] C यथा चात्र B दशाचारी [२] A मण्डलं [३] A तथा [४] B .....नतं [५] AC spell all the सूची with श [६] B तथा [७] AB ......कारिकाम् [८] AB चरणं

(?)समनखा नूपुरविद्धा तिर्यङ्मुखी मराला च ।
कातरा च कुवीरा च विश्लिष्टा[1] रथचक्रिका ।।
(?)पार्ष्णिरेचितका[2] तलदर्शिनी गजहस्तिका ।
परावृत्ततला चोरुताडिताप्यर्धमण्डला ।।
स्तम्भ[3]क्रीडनिका हरिणत्रासिका चारुरेचिका ।
तलोद्वृत्ता सञ्चरिता स्फुरिकापि तथैव च ।।
लङ्घित (लङ्घि ?) जङ्घा संघट्टिता स्यादथैव मदालसा ।
उत्कुञ्चितातितिर्यक्[4]कुञ्चिता चापकुञ्चिता ।
षड्विंशतिर्भौमचार्य इत्याख्याता मनीषिभिः ।।

अन्ये तु—

समपादा स्थितावर्ता[5] शकटाध्यर्धिकापि[6] च ।
विव्याधा[7] ताडिता बद्धा एडका (एलका?) क्रीडिता तथा ।।
ऊरुवृत्ताच्छन्दिता जनितापस्पन्दिता तथा ।
स्पन्दितावत् समतन्वी समोत्सारितमट्टिका ।
उच्छन्दिता च विज्ञेयाश्चार्यः षोडश भूमिगाः ।। इति भूमिचारी ।

आकाशचारी यथा ।

चारीश्चाकाशगा वक्ष्ये विक्षेपात्तुम्बरी[8] तथा ।
अङ्घ्रिताडिता भ्रमरी पुरःक्षेपा च सूचिका ।।
अपक्षेपा जङ्घावर्ता विद्धा च हरिणप्लुता ।
ऊरुजङ्घान्दोलिता च जङ्घालङ्घनिका तथा ।
विद्युत्क्रान्ता भ्रमरिका दण्डपादेति[9] षोडश ।।

अन्ये तु—

विभ्रान्ताऽतिक्रान्ताऽपक्रान्ता (च) पार्श्वक्रान्तिका ।
ऊर्ध्वजानुर्दोलापदो वृत्ता नूपुरपादिका ।।
भुजङ्गत्रासिका[10] क्षिप्ताऽविद्धताला च सूचिका ।
विद्युत्भ्रान्ता भ्रमरिका दण्डपादास्तथैव च ।
आकाशचारिका एताः षोडशैव निरुपिताः ।।

---

[1] B विशिष्टा [2] B रेचकिता [3] C तनु...... [4] A अभितिर्य्यक्...... [5] A वर्णा
[6] AC शकटास्याध्य...... [7] B विव्याध्या [8] B डुमुरि [9] C दण्डपार्श्वेति B दण्डपातेति
[11] C ......भीषिका

एतास्वेव भूमिचारीष्वाकाशचारीष्वप्यवान्तरभेदोऽस्ति। तिर्यक्चारी ऊर्ध्वचारी अधश्चारीति ता ऊहनीयाः।

तैलाभ्यक्तेन गात्रेण लघ्वाहारो जितश्रमः।
स्तम्भे वा भित्तिदेशे वा प्रथमं ताः प्रयोजयेत्॥
रुक्षाहारं तथाम्लञ्च भुक्त्वा तां न समाचरेत्।
नृत्यपादस्य विन्यासश्चारी सैवाभिधीयते॥
शृङ्गारादिरसानान्तु भावोद्दीपनकारणम्।
माधुर्योद्गमनानि(त्रि?)त्यं हृद्यताललयान्विता॥
नियताङ्गविशेषाणां चारी सञ्चारतो भवेत्॥

इति चारीलक्षणम्।

करणानान्तु सर्वेषां सामान्यं लक्षणं त्विदम्।
प्रायो वाम[1]करो वक्षःस्थितोऽन्यः पुरतोऽनुगः॥
पादाभ्यां करणं ज्ञेयं तदिहाष्टोत्तरं शतम्।
अङ्गावभरण (गङ्गावतरण?) ञ्चैव शकटास्यमतः परम्॥
अहिर्सार्पितं लोलितञ्च[2] वृषभक्रीड़ितं तथा।
उद्घट्टितं विक्षतञ्च (विष्कम्भञ्च?) संभ्रान्तं विष्णुक्रान्तकम्॥
परिवृत्तं सिंहक्रीडमुद्वृत्तं सिंहकर्षितम्।
तलसंघट्टितं चोपसृतं जनितमेव च॥
अवहित्थं निवेशञ्च एलकाक्रीडितं तथा।
प्रसर्पितं चोरुवृ (द्वृ?) त्तं करिहस्तस्खलितकम्[3]॥
नितम्बकं प्रेङ्खलितं हरिणप्लुतमेव च।
उत्सर्पितं दण्डपादं[4] गण्ड[5]सूचिकमेव च॥
सूचीपादं पार्श्वजानु सूची गृध्रावलीनकम्।
समुन्नतमर्धसूची सूची वृत्तं निकृन्तकम्[6] (?)॥
मयूरललितञ्चापक्रान्तञ्चापि वि (नि?) वृत्तकम्।
निकु (शु?) म्भितं पार्श्वक्रान्तमतिक्रान्तं विवर्तकम्॥
विद्युद्भ्रान्तं[7] गजक्रीडं क्रान्तञ्च गरुडप्लुतम्।
तलसंस्फोटितञ्चापि कुञ्चितं चक्रमण्डलम्॥

---

[1] A वामो [2] A लोहितञ्च [3] A करिहस्तनीतकं C करिहस्तस्थनीडकम
[4] BC .......पदं [5] B दण्ड...... [6] B निकुन्तकम् [7] B ......क्रान्तं

उरोमण्डलमाक्षिप्तं मुकुलं (?) तलविलासितम्[1] ।
आवर्तितं दोलपादमर्धस्वस्तिकमञ्चितम् ।।
विक्षिप्ताक्षिप्तकञ्चापि[2] भुजङ्ग[3]त्रासितं तथा ।
निकुञ्चितञ्चोर्ध्वजानु मतल्ल्यर्धमतल्लिका ।।
बलितं रेचकं कुट्टं घूर्णितं पादविद्धकम् ।
ललितं दण्डपक्षञ्च भुजङ्गस्रस्त (त्रस्त?) रेचितम् ।।
विशाखरेचितञ्चैव नूपुरं भ्रमरं तथा ।
चतुरं भुजङ्गाञ्चितं छिन्नकं दण्डरेचितम् ।।
वृश्चिककुट्टितं कटिभ्रान्तं च लतावृश्चिकम् ।
वृश्चिकं वृश्चिकरेचितं व्यङ्गितं (व्यंसितं?) पार्श्वकुट्टकम्[4] ।।
ललाटतिलकञ्चार्धरेचितं स्वस्तिकन्तथा ।
कटिच्छिन्नं वक्षः[5]स्वस्तिकमुन्मत्तं पृष्ठस्वस्तिकम् ।।
दिक्स्वस्तिकमालातं[6] लीनञ्चापि कटीसमम् ।।
आक्षिप्तरेचितञ्चापि तथा स्वस्तिकरेचितम् ।।
मण्डलस्वस्तिकं स्याद्वा[7] निकुट्टकं च वर्जितम्[8] (वर्तितम्?) ।
अर्धनिकुट्टकञ्चापि विद्धं समनखं तथा ।
तलपुष्पपुटञ्चापि विक्षिप्तं वमितोदितम् (?) ।।
इति करणम् ।

मण्डलं यथा ।

संग्रामनृत्यनाट्येषु युद्धव्यायामयोस्तथा ।
मण्डलानि नियोज्यानि भौमान्तरीक्षभेदतः ।।
भौमानि दशसंख्यानि तावन्त्याकाशगान्यपि ।
समुत्पन्नानि चारीभ्यस्तेषां नाम निरुच्यते ।।
भ्रमरं शकटास्यञ्च समोत्सारितमड्डितम् ।
(?) अध्यर्धमण्डलं परार्धमेलकाक्रीडितम्[9] ।।
अस्कन्दितं[10] भवेदन्यद् भवेदावर्तमण्डलम् ।
अपगतञ्चेति भौमानि मण्डलानि दशैव हि ।।*

---

[1] AB तान्विलासितम् (?) [2] A निक्षिप्ताक्षिप्तकं [3] B भुजग...... [4] A पार्श्वकुट्टिकम् [5] B वक्षश्च [6] A ......मानातं [7] B स्यात्तु [8] B चावर्जितम् [9] C drops the line B पिष्टकुट्टमेलका...... [10] C अस्पन्दितं * BC adds a line after this आकाशिकानि कथ्यन्ते मण्डलानि दशैव हि

दण्डपादं सूचीविद्धमालाभं[१] विचित्रितं तथा ।
वामाविद्धञ्च विकृतं ललितं लीनमेव च ।
जनितञ्चेति प्रोक्तानि मण्डलानि नभःस्थले ।।
करणाभ्यामखण्डाभ्यां कथिता नृत्यमात्रिका ।
करणैस्त्रिभिरेवोक्तः कलापः खण्डकः पुनः ।।
चतुर्भिः पञ्चभिः प्रोक्तः संघात इति निश्चयः ।
षडादिदशपर्यन्तैरङ्गहारस्तु तैर्भवेत् ।।
तेऽप्यपराजिताद्याः स्युरङ्गहारास्तु षोडश ।
ये चतुरस्रतालोत्थास्तावन्तस्त्र्यस्रतालजाः[२] ।।
अपराजितो मत्ताक्रीडः स्थिरहस्तो भ्रमरकः[३] ।
मदविलासितः पर्यस्तः सूचीविद्ध आक्षिप्तकः ।।
परिच्छिन्नः पार्श्वच्छेदः परावृत्तोऽपसृतकः[४] ।
विशाखरेचिताच्छुरितौ विद्युद्भ्रान्तालीढकावपि ।।
षोडशैते[५]ऽङ्गहाराः स्युश्चतुरस्रतालजाः ।
शङ्करप्रीतिविषयाः सर्वे सर्वरसाश्रयाः ।।

एते चतुरस्रतालजा हरप्रियाः षोडशाङ्गहाराः ।।

त्र्यस्रतालजाः षोडशाङ्गहारा यथा—

अपविद्ध उद्घटितो विष्कम्भकस्तथैव च ।
विष्कम्भापसृतश्चापि तथा स्वस्तिकरेचितः ।।
पार्श्वस्वस्तिक उद्वृत्तः सम्भ्रान्तो रेचितस्तथा ।
वृश्चिकोऽपसृतालातौ[६] मत्तस्खलितकस्तथा ।।
(?)उरोरेचितार्ध[७]निकुट्टश्च गतिमण्डल एव च ।
प्र (परि?) वृत्तरेचितश्चेत्थमङ्गहारास्तु षोडश ।।
त्र्यस्रतालभवा एते नित्यं हरि[८]मनोहराः ।।

इत्यङ्गहाराः ।।

नृत्ये विषमालगानि(?) यथा —

भौमालगादिभेदेन विषमानि त्रयोदश ।
अञ्चितञ्चैकपादञ्च कर्तरी भैरवं तथा ।।
दण्डप्रणाममित्याहुः पञ्च भौमानि तानि तु ।

---

[१] AB ......मानातं   [२] B ......तालिका   [३] B भ्रमकरः   [४] B सूतकः
[५] A षोडशैव ते   [६] C ......लाभौ   [७] B उदारोर्ध्वनिकुट्टश्च   [८] C हर.....

हेलालगमुत्तानालगमन्तरालगन्तथा ।
कूर्मालगं लोहली स्यादन्तर्भ्रमरिका तथा ।।
बाह्यभ्रमरिका तिर्यग्लगभ्रमरी तथा ।
आकाशिकानि कथितान्यष्टौ विषमभेदतः ।।
छत्रचक्रेरिताद्यास्तु भ्रमर्यो विविधाः पुनः ।
कपालच्छुरिता[1]द्यास्तु विषमाविषमाः पुनः ।।
ग्रन्थविस्तारभीतेन मयाल्पेनात्र दर्शिताः ।।

इति विषमनृत्याङ्गानि ।।

राधाया मुखपङ्कजे भ्रमरिको बन्धूकपुष्पादरा[2]-
दालीढोऽथ तथाधरे मधुकरो लीलाभिरुद्भ्रान्तया ।
मत्ताक्रीड इवैष कंसनिधने पर्यस्तचानूरक-
श्चेदीनामपराजितो विजयते मूर्तोऽङ्गहारोऽच्युतः ।।

अथ नृत्यम् ।

देशरुच्या प्रतीतो यस्तालमानरसाश्रयः ।
सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ।।
ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते[3] ।
[4]पुंनृत्यं ताण्डवं नाम स्त्रीनृत्यं लास्यमुच्यते ।।
पेरणिर्बहुरूपञ्च ताण्डवं द्विविधं मतम् ।।
अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता ।
यत्र सा पेरणिस्तस्याः संज्ञा देशीति लोकतः ।।
छेदनं भेदनं यत्र बहुरूपा मुखावली (?) ।
ताण्डवं बहुरूपं तद्दारुणागतमुद्धतम् ।।
छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते ।
यत्राङ्केऽभिनयैर्भावै रसैराश्लेषचुम्बनैः ।
नायिकानायकौ रङ्गे नृत्यतश्छुरितं[5] हि तत् ।।
मधुरं रङ्गलीलाभिर्नटीभिर्यत्र नृत्यते ।
वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ।।

---

[1] A ......च्छुरिका...... [2] C ......पुष्पाधरा...... [3] B ......मिष्यते [4] C omits the line [5] A ......तः छुरितं B नृत्यं छुरित

गेया[1]दुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः ।
लयस्तालसमारब्ध[2]स्ततो नृत्यं प्रवर्तते ।।

नाट्योत्पत्तिर्यथा——

इहानुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्यवेदन्तु पञ्चमम् ।।
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ ।
तत्रोपवेदो गान्धर्वः शिवेनोक्तः स्वयम्भुवे ।।
तेनापि भरतायोक्तस्तेन मर्त्ये प्रचारितः ।
शिवाब्जयोनिभरतास्तस्मादस्य[3] प्रयोजकाः ।।

नाट्यफलं यथा ।

देवर्षिक्षितिपालपूर्वचरितान्यालोक्य धर्मोदय-[4]
स्तद्भावाश्रितभूमिकाभिनयने स्यादर्थसिद्धिः परा ।
सङ्गीताहृत[5]चित्तवृत्तितरला वश्या भवन्त्यङ्गना
ज्ञानं शङ्करसेवयेति कथितं नाट्यं चतुर्वर्गदम् ।।
यो यस्य दयितो भावः स तन्नाट्ये निरीक्षते[6] ।
अतः सर्वमनोहारि नाट्यं कस्य न रञ्जकम् ।।

नाट्ये वक्ष्यमाणे तदङ्गत्वादन्यच्च निरूप्यते[7] ।

तथा च रङ्गविन्यासो यथा——

हस्तविंशतिविस्तारा रङ्गभूमिर्मनोहरा ।
पूर्वाभिमुख एवात्र नायकः शोभते परम् ।।
पश्चिमाभिमुखीनाञ्च रम्याणां भूषणाम्बरैः ।
नायकाभिमुखीनाञ्च गायन्तीनां परस्परम् ।।
ताले कृतावधानानां नटीनामुपवेशनम्[8] ।
पार्श्वयोरुभयोस्तासां मृदङ्गानां चतुष्टयम् ।।
दक्षिणे मुरजस्थानं पृष्ठे यमनिका तथा ।
तन्मध्ये मण्डलस्थानं नेपथ्यं तच्च (तत्र ?) गीयते ।।

अन्तःपटो यमनिका ।

---

[1] B गाया......　[2] A लयतालसमारब्धं　[3] B ......स्तस्मादत्र　[4] C धर्मादय......
[5] B सङ्गीताकुत......　[6] B निरीक्ष्यते　[7] C निरुच्यते　[8] A ......मुपवेशयेत्

नटीभिस्त्रिसृभिर्नित्यं[1] पञ्चभिः कुशलैर्नटैः ।
नाटचस्य जायते सिद्धिः किमन्यैर्निर्गुणैरिह ।।
याममात्र[2]समाप्यं यत् तन्नाटचं रागवर्धनम् ।
दीर्घं विरागजनकमतो नाटचं विवर्जयेत् ।।
यस्मिन् रसे स्थितं नाटचं पात्रं तत्र सदीपनम् ।
गीतं गायेत्ततो नृत्यं कृत्वा ग्रन्थं पठेत् पुनः ।।
यादृशं नृत्यपात्रं स्याद् गीतं योज्यन्तु तादृशम् ।
नृत्यस्य धारणात् पात्रं नर्तकः परिकीर्तितः ।।

जर्जरपूजा यथा ।

पञ्चपर्वयुतो वंशो जर्जरः परिकीर्तितः ।
ऊर्ध्वपर्वणि शुक्लः स्यात्तदधो नीलवर्णकः ।।
ततः पीतस्ततो रक्तश्चित्रवर्णस्ततः परम् ।
सर्ववर्णपताकाभिः सर्वतः समलङ्कृतः ।।

तत्र गणपतिदिक्पालादिपूजां कुर्यात् ।

मसी यथा ।

हरितालादिसामग्री मसी सैव तु वर्णिका[3] ।।

तत्र हरितालग्रहणमन्त्रः ।

वर्णिकाग्रहणार्थं त्वं निर्मितोऽसि स्वयम्भुवा ।
देवैश्च वन्दिते नाटचे सर्वसिद्धिप्रदो भव ।।

अभिमन्त्र्य ततः पट्टैर्हरितालं[4] तथेष्टकाम् ।
[5]तावद्विचूर्णयेद् यावत् परमाणुसमं भवेत् ।।
पानीयालोडितं कृत्वा तया वक्त्रं प्रलेपयेत् ।
रूपचिह्नक्रियातुल्यो मसीवेशो मतो बुधैः ।।

पूर्वरङ्गो यथा[6] ।

पूर्वरङ्गः सभापूजा कवेर्गोत्रादिकीर्तनम् ।
नाटकादेस्तथा संज्ञा सूत्रधारोऽप्यथामुखम् ।।

---

[1] A नृत्यं [2] A याममात्रं [3] A वर्तिका [4] B पट्टे हरिताभं [5] B तावद्धि चूर्णयेत् यावत् परमार्थसमं भवेत् [6] B omits the heading

अर्थो[1]पक्षेपकाः पञ्च तथाङ्कविधिरेव च।
अर्थ[2]प्रकृतयः पञ्च चतस्रो वृत्तयस्तथा॥
नाट्योक्तेस्तु समावेश[3]स्तथा भाषाविभाषयोः।
प्रायशः सर्वनाट्येषु कीर्त्यन्ते संहृता इमे॥

नान्दी यथा।

गङ्गा गणपतिः सोमः सुधानन्दो जयाशिषः।
एतैर्नामपदैर्भव्यै(?)र्नान्दी कार्या विचक्षणैः॥
शिवानन्दकरी नान्दी नान्दी विघ्नोपशान्तये।
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमास्थितः॥

सोम इति हरचन्द्रौ द्वावपि।

सूत्रधारो यथा।

नर्तकीयकथासूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥

प्रस्तावना यथा।

नटी विदूषको वाऽपि पारिपार्श्विक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते॥
चित्रैर्वाक्यैः स्वकार्यार्थे वीथ्यङ्गैरन्यथापि वा।
प्रस्तावना हि सा ज्ञेया सैवामुखमपीष्यते॥

विष्कम्भको यथा।

कुतोऽपि स्वेच्छया प्राप्तः सङ्गतो नोभयोरपि।
विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः॥

प्रवेशको यथा।

असूचितस्य पात्रस्य प्रवेशो नैव दृश्यते।
अतः[4] प्रधानपात्राणां सूचकः स्यात् प्रवेशकः॥

अर्थ[5]प्रकृतयो यथा।

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च।
अर्थ[6]प्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥

---

[1] A अथो...... C आन्नो.....(?) [2] AC अनु...... [3] A ......वेशः तथा [4] A ततः
[5] A अनु..... [6] A अनु......

**वृत्तिर्यथा ।**

**कैशिक्यारभटी चैव सात्वती भारती तथा[1] ।**
**चतस्रो वृत्तयः प्रोक्ता नाट्यसम्भवकारिकाः ।।**
**नेपथ्यगीतवादित्ररसभावाभिनीतयः ।**
**(?)नृत्यजातिरमीषान्तु विशेषे वर्तनञ्च सा ।।**

करणचारी मण्डलस्थाना[2]ङ्गहारादिभिः समुचितगीतवाद्यलयतालकलाभिनयरस-भावादिभिश्च नृत्यं करणीयम् । अतःपरं[3] लास्याङ्गं किञ्चिदुच्यते ।

**द्विविधं नृत्यमुद्दिष्टं लास्यताण्डवभेदतः ।**
**लास्याङ्गानीह कथ्यन्ते संक्षेपेण कियन्त्यपि ।।**
**अङ्गविक्षेपबाहुल्यान्नृत्यं स्याद्धस्तकादिभिः ।**
**कर्णाटदेशकेन स्यादलङ्कारः स्वदेशजः ।**
**प्रविश्य नर्तकी रङ्गं विकीर्य कुसुमादिकम् ।**
**निःसारुकेन[4] तालेन कोमलं नृत्यमाचरेत् ।।**
**तद्विषमो[5]द्धताद्यैस्तु विहीनं कोमलं भवेत् ।**
**तदेतन्नागरं नृत्यं माण्डली[6]त्युच्यते बुधैः ।।**
**ततो लास्याङ्गकैः कुर्याद्विचित्रौचित्यशोभितम्[7] ।**
**विषमोद्धतमाधुर्यैस्तद्विचित्रमिहेष्यते[8] ।।**
**ततो निवार्य वाद्यानि नर्तकी गायनान्विता ।**
**नायकान्तिकमागत्य कुर्यादालापिकान्ततः ।।**
**तन्महत्सौष्ठवं कृत्वा गायेद् ध्रुवकमादितः ।**
**नृत्यभूमिं समाक्रम्य ध्रुवा प्रथमखण्डके ।।**
**गीयमाने पुनस्तत्र यः कया(?) कोमलं कियत् ।**
**नृत्यं विधाय भूयोऽपि पाटञ्च नृत्यगीतयोः ।।**
**कलासं शोभनं कुर्यात् सम्भोगं तदनन्तरम् ।**
**सप्रहरणवाद्येन प्रोक्तस्तालेन[9] (?)कोमलम् ।।**

---

[1] A यथा [2] B .....स्थानका..... [3] B अनन्तरं [4] C निशारुकेन [5] B .....विषयो.....
[6] B मण्डली [7] C विचित्रं चित्रशोभितम् A विचित्रौ चित्तशोभितम् (?)
[8] C ......मिहोच्यते [9] C प्रोक्तः स्थाने च A प्रोक्तः स्थानेन (?)

नृत्यं कृत्वा पुनश्चैव गीतं किञ्चिदथा[१]चरेत् ।
छन्दनं प्रतिगीतान्ते कुर्यादितीह संग्रहः ।।

नृत्याङ्गान्यपराण्याहु[२]श्चालिश्चालिवटस्तथा ।
नटि[३]स्तुकमो (मिहो?) रङ्गणो धषको नतिरेव च ।
रेखाद्योतित इत्यादि नव तानि [४]मतानि वै ।।

कटिकरभुजवल्लीचालनोद्यद्विलासं
घनमतिमृदुशीघ्रं तालमादि[५]प्रयुक्तम् ।
सहृदयरसिकानां चित्तमाह्लादयेद् यद्-
रतिरमणविकारोद्दीपनं चालिरुक्ता ।।
चालिलक्षणसंयुक्तं[६] सुमुखी[७]बहुलन्तु यत् ।
तच्चालिवटमित्याहुर्नृत्यकर्मविशारदाः ।।
अतिमृदुसविलासं तालमानादियुक्तं
करचरणकटीनामेकदा चालनेन ।
सकलरसविशेषज्ञानशालिप्रमोदं
वितरति यदिहोक्ता नृत्यकृत्ये नटिः सा ।।
सङ्गीतेषु मनो निधाय[८] सरसं शृङ्गारभावालसं
सत्त्वाद्या[९]नतिकोमलञ्च विदुषां माने तु चित्ताहृते[१०] ।
भ्रूनेत्राधरचालनैस्तु ललितं यद्धस्तसञ्चालनं
लास्याङ्गं प्रथमं वदन्ति सुधियस्तत्तद्विशेषन्तुकम् ।।
भ्रूनयनादिना नृत्यं[११] युतमङ्गविवर्तनैः ।
कुचयोश्चालनं यच्च तदिहोरङ्गणो मतः ।।
गीतादौ प्रणिधाय चित्तमखिलं त्यक्त्वा बहिश्चेष्टितं
सत्कन्दर्पविचारचारुविलसद्भ्रूलोलनादिक्रियम्[१२] ।
नीत्वा तालस्यादिभिः कुचयुगं किञ्चित्ततोऽर्ध्वं पुन-
र्निश्वासै[१३]र्मधुरैर्निपात्य धषकः स्याद्वाद्यतालानुगः ।।

---

[१] A ......त्तथा [२] B .....हुः चालि..... [३] B नाट...... [४] B च [५] B ......मादिग्ध......
[६] AC ......सम्पूर्णं [७] A सौमुखी [८] A विधाय [९] B संवाद्या...... [१०] B चित्ताकृते
[११] A नृत्य...... [१२] C ......क्रियाम् [१३] A विश्वासै

उद्यत्तालयानुगं सुललितं माधुर्यगात्रा[१]नति-
स्तिर्यक् यच्च नतिस्तदत्र गदिता मौलेस्तु किञ्चिन्नतैः(?)।
(?)गात्रस्यैव पुनर्भवेदिह तथोद्गारश्च रेखा पुन-
स्तालाद्याश्रितसौष्ठवं मृदुतनोर्लालित्ययुक्ता स्थितिः[२] ।।
तत्तद्वाद्यविवर्तनेन सदृशं नानाप्रकारात्मकं
तत् स्याद् द्योतितसंज्ञकं स्मितमथोदन्ता[३](?)प्रसादा[४]श्रितम् ।
सङ्गीतादिलयानुगं तु मनसो वैकृत्यसञ्जीवनं
नाभ्यस्तं[५] यदि वा भवेदिह मनो धर्मः स नर्मप्रदः ।।
इति लास्यनृत्याङ्गानि ।।

पूर्वोक्ताभिनयोन्मिश्रश्चित्रोऽभि[६]नय उच्यते ।
कथ्यते तत्प्रकारोऽपि यथा भरतभाषितम् ।।
उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ।
उद्वाहितेन शिरसा तथैवोर्ध्वनिरीक्षणात् ।।
प्रभातं गगनं रात्रिं प्रदोषं दिवसं तथा ।
ऋतून् घनान् वसन्तांश्च विस्तीर्णांश्च जलाशयान् ।
दिशो ग्रहांश्च नक्षत्रं प्रस्थं यच्च विभावयेत् ।
(?)एवमेवाधो निरीक्षणात् भूमिष्ठं दर्शयेत् पुनः ।।

एवमनेकैर्हस्तैश्चित्राभिनयो भवति। तत् सर्वं ममैव हस्त[७]मुक्तावल्यां वर्तते, तत्रैवानुसन्धेयं युक्तिमद्भिरिति। यद्वा अङ्गुलीनां विन्यासविशेष[८] एव चित्राभिनय इति।

इदानीं भाषाविभागो यथा ।

संस्कृतं प्राकृतं अपभ्रंशः पैशाचिकमिति चतस्रो भाषा भवन्ति[९] ।

देववाणीति विख्यातं संस्कृतं भुवनत्रये ।
साधुशब्दत्वमेतस्य सर्वत्र सूरयो विदुः ।।
देवा भूपतयः पुरोधस इहामात्याश्च शाक्यास्तथा
सद्विद्यामुनयोऽपि लिङ्गिन इहाहीशास्तथा पन्नगाः ।

---

[१] B ......गोत्रा......   [२] C लालित्यमुक्तास्त्रिभिः   [३] C स्मितमखो दान्ता (?)
[४] B प्रशान्ता......   [५] C नात्यन्तं   [६] B चित्राभि......   [७] B हस्तक......
[८] B विशेषविन्यासाश्चित्राभिनय   [९] C adds इति

**सिद्धाः श्रोत्रियसत्तमाश्च वणिजः श्रेष्ठाः परिव्राजका[१]**
**ये चान्ये गुणिनो मताश्च सुजनास्ते संस्कृतैर्वादिनः ।।**
**इति संस्कृतविभागः ।**

**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ।**

प्रकृतेः संस्कृताद्भवं प्राकृतम् । तद्भवः संस्कृतभवः। यथा—शृङ्गारः सिङ्गारः[२], चन्द्रश्चन्दो, ब्राह्मणः[३] वम्हनो, कनकं कणअ[४], रत्नं रअण, सिन्दूरं सेन्दुरं[५], शेफालिका शेहालिका, सुरभिः सुरही, लक्ष्मी लछमीत्यादयः ।

तत्समः संस्कृतसमः। यथा हीरहरिहरहार[६]केरलतीरतरलरमणीमणिप्रभृतयः शब्दाः ।

**यस्मिन् देशे यथारीतिः प्राकृतस्य निबध्यते ।**
**तेनैव व्यवहारेण तद्देशीयं निरुच्यते ।।**

यथा गुज्जरातादिदेशेषु दुन्दोली[७] प्रेमविच्छीली पङ्क्तिः[८](?) कन्दोट्टमुत्पलमिति निगद्यते ।

**गन्धर्वास्त्रिदशारय क्षपणका रक्षस्तथा योषितो**
**लिङ्गव्याजधरास्तथैव सुभटा विद्याधराः किन्नराः ।**
**ये चक्रादिधराश्च नियतं राज्यादिसंप्रेषिता-**
**स्ते सर्वे गुणिनो भवेयुरधिकं[९] तत् प्राकृतोक्तौ मताः ।।**

**दाक्षिणात्या महाराष्ट्री वाह्लिकी चार्धमागधी ।**
**आवन्तिका[१०] तथा प्राच्या षोढा प्राकृतजातयः ।।**

**तथा—**

**महाराष्ट्रोद्भवां भाषां विशिष्टं प्राकृतं विदुः ।**
**सागरः सूक्तरत्नानां सेतुबन्धादि यन्मयम् ।।**

सेतुः प्राकृतनिबद्धः[११] कालिदासकृतो ग्रन्थः। डकारबहुला महाराष्ट्री भाषा । इति प्राकृतविभागः ।

**वाच्या वर्वरकुट्टनी[१२]खलजनैर्वैदेशिकैर्द्विविटै-**
**रस्पृश्यैः कुलजार्थिभिश्च नियतं नीचैस्तथा षण्डकैः[१३] ।**

---

[१] AC सविभ्राजकाः (?) [२] A सिङ्गारो [३] A ब्राह्मणो [४] A कणयं [५] A सेदुरं
[६] B हीरहरहारकीर...... [७] A द्वन्दोली [८] BC पंक्तिः [९] C भवेद् यदधिकं
[१०] B अवन्तिका [११] C ......निबन्धः [१२] B कुट्टिनी...... [१३] BC पण्डकैः

नानादेशनिवासिभिः परिजनैरन्यै[1]रपि क्ष्मापते-
भाषारूपनिरूपणे नियमिता भ्रष्टा न दुष्टा क्वचित् ।।
संयुक्तायुक्तयोर्दीर्घह्रस्वयोर्वैपरीत्यतः ।
उच्चारभङ्गो वर्णानामपभ्रंश उदाहृतः ।।
इत्यपभ्रष्टाविभागः ।

पैशाची तु पिशाचराक्षससमैर्नीचादिभिश्चाधमैः
पाषण्डैश्च[2] वनेचरैश्च विविधैः पापाश्रयैः[3] पौक्कसैः ।
ये चाप्युत्तर[4]दिङ्निवासनिरता नीचाः खशा वर्वरा-
स्तैरप्यत्र विशेषतो नियमिता भाषा निगद्या हि[5] सा ।।
रेफस्थाने लकारोऽत्र लस्य स्थाने तु रेफकः[6] ।
दकारस्य तकारोऽपि भेदकः प्राकृतादिभिः ।।
इति पैशाची ।

केषाञ्चिन्मते सौरसेनी मागधी चेति पृथग्[7] भाषाद्वयं भवति ।
सौरसेन्यां धकारस्य हकारो भवति ध्रुवम् ।
चतुर्थीस्थानगा षष्ठी तेन भेदोऽन्यभाषया ।।
सा भवेन्मागधी यत्र प्रथमान्तपदे भवेत् ।
ऐकार एव सर्वत्र भेदोऽयं मुनिसम्मतः ।।

अथापभ्रंशप्राकृतयोः समावेशः। मोरी वाणी अवहंसे रमयि। मम वाणी अपभ्रंश एव रमते। प्राकृतपक्षे मयूरसम्बन्धिनी वाणी अवहंसे अपगतहंसे काले वर्षाकाले रमते। इत्यादि।

अथ विभाषा यथा ।

आभीरिका शवरिका[8] खशिका शकारी
चाण्डालिका तदनुचोत्कलिकाभिधाना[9] ।
सा द्राविडी च कथिता कृतिभिर्विभाषा
पैशाचिके स्वरसमास . . . . . योगात् ।।
आभीरिकायां सम्बुद्धावैकारो भेदकारकः ।
सवरिकायां सम्बुद्धावोकार इह भेदकः ।।

---

[1] B परिजनैः सर्वै...... [2] A पाषण्डै [3] B पापप्रियैः [4] B .....प्युत्तम..... [5] AC च [6] AC स्थाने रकारकाः [7] A omits पृथग् [8] AC सवरिका [9] A चेति कलिका-भिधाना (?) B केलिकाभिधाका (?)

इकारबहुला भाषा खशिका सा निगद्यते ।
सकारबहुला चैकानुपदा[1] सा शकारिका[2] ॥

प्रतिवचनं व्याप्य निरर्थः सकारो यत्र सा शकारी विभाषा इत्यर्थः ।

हेकारसेकारमयी लकारयुता च रेफै रहिता च लिङ्गैः ।
चण्डालनीचाधमराक्षसानां चाण्डालिकेयं कथिता तु वाणी ॥
अटेपदं यत्र चकास्ति भूयः सरोषनिर्माणवतीव वाणी ।
भाषोत्कली सा कथितोड्र[3]देशे नाटचे निगद्या च भवेत्तथेयम् ॥
द्राविडीति[4] गदिता[5] तुकारिणी
बालिका (?) पटुभिरेव पण्डितैः ।
सा भवेद्द्रविडदेशसम्भवा
भाषिता च सकलैस्तदाश्रितैः ॥

इति विभाषाः[6] ।

कारणव्यपदेशेन देवादीनामपि क्वचित् ।
योजनीयं प्राकृतन्तु नानारूपकरूपकान् ॥
गङ्गासागरयोर्मध्ये ये देशाः समवस्थिताः ।
हिमवद्विन्ध्यसौवीरपुक्कसादिसमाश्रयाः ।
डकारबहुलास्तेऽपि भाषा देश्या मनीषिभिः ॥
ओकारबहुलञ्चापि वचः कीकसदेशजम् ॥

इति भाषाविभाषाप्रकरणम् ॥

## अथ नाटचोक्तयः ।

आर्येति ब्राह्मणं, क्षत्रियं महाराजेति, सखीं हलेति, नीचं हण्डे इति[7], चेटीं हञ्जे इति, स्वामिनं आर्यपुत्रेति, राजश्यालं राष्ट्रियेति, समानं हं हो इति, राजानं देवेति, सार्वभौमं भट्टेति, भगिनीपतिमावुत्तेति सम्बोधयेदित्यादि लक्षशः[8] सन्ति बाहुल्यभयान्नोक्तानि ।

नाटचालङ्कारो यथा ।

सिद्धि[9]र्मनोरथभ्रंशो[10] निरुक्तिश्च विशेषणम् ।
गुणातिपात उद्दिष्ट[11]विचारप्राप्तिनीतयः[12] ॥

---

[1] B भाषाऽनुपदा [2] C सकारिका [3] C कथितोढ...... [4] BC तु [5] C कथिता
[6] C भाषाः [7] A हण्डेति [8] A लक्षणानि [9] A सन्धि...... [10] A मनोरथो भ्रंशो
[11] C उद्दिष्टं [12] B प्रापनीतयः (?)

अभिप्रायः परीहारो गर्हणानुनयौ तथा ।
अर्थापत्तिः प्रसिद्धिश्च दाक्षिण्यं प्रियभाषणम् ॥
अभिमानाख्यानगर्वहर्षक्षोभोद्यमाश्रयाः[1] ।
पश्चात्तापः स्पृहाक्रन्दौ कपटञ्च प्रवर्तनम् ॥
उत्तेजनञ्च दृष्टान्तः शोभोदाहरणे अपि ।
संशयोऽक्षरसङ्घातो विमलोक्तिः पदोच्चयः ॥
परीवादोऽनुक्तसिद्धिरङ्कमाध्यवसायकौ[2] (?) ।
प्रोत्साहनं तुल्यतर्क उपपत्त्यनुवर्तने ॥
निवेदनञ्च साहाय्यं याच्ञा पृच्छा विशेषणम् ।
अभिज्ञानञ्च सारूप्यं गुणकीर्तनयुक्तयः[3] ॥
विपर्ययश्चातिशयो भूषाहेतुर्निदर्शनम् ।
मानालेशश्च संक्षेपः समीहाशी विसर्पकाः[4] ॥
उल्लेख उपदिष्ट[5]ञ्चेत्यष्टषष्ठीमिता[6] अमी ।
अलङ्कारा मता नित्यं नाटकादिषु सूरिभिः ॥

इति नाट्यालङ्काराः ।

लक्षणञ्च बाहुल्यभयान्नोक्तम् ।

[7]सप्तविंशतिरूपाढ्यै रूपकैरुपरूपकैः ।
नृत्ये नक्षत्रमाला स्यात् मुक्ताबन्धैरिवोज्ज्वला ॥

अथ नृत्ये रत्ननक्षत्रमाला यथा ।

यदुक्तमङ्गमङ्केति[8]भिन्नं विष्कम्भकादिकम् ।
तन्नाटकादिषु ज्ञेयं तेषां लक्षणमुच्यते ॥
नाटकं स्यात् प्रकरणं व्यायोगोऽङ्कस्तथा डिमः ।
ईहामृगः प्रहसनं भाणः समवकारकः ॥
वीथीति भरतः प्राह नाट्येषु दशरूपकम् ॥
नाटिका प्रेक्षणञ्चैव तोटकं शाटकं तथा ।
गोष्ठी संलापशिल्पानि भाणी हल्लीश[9]रासकौ ॥

[1] B .....श्रमाः [2] AC ......ऽनुरक्तसिद्धिरक्षमाध्यवसायकौ (?) [3] AC ......मुक्तयः [4] B विसर्पिकाः [5] A उपदिष्टि ..... [6] C ......षष्ठिरिहा [7] A सप्तविंशतिरूपाणि नाट्ये रूपकैरुपलक्षकैः (?) [8] C ......मङ्गङ्गेति [9] A हल्लीर (?)

उल्लापकं श्रीगदितं प्रस्थानं नाट्यरासकम् ।।
दुर्मल्लिका[1] लासिका च काव्यञ्चेत्युपरूपकम् ।
स्यात् सप्तदशसंख्यन्तु लक्षणं त्वत्र कथ्यते ।।

प्रख्यातोत्तमनायकं रसमयं राजर्षिवंशोद्भवं
साङ्गं भङ्गजयान्वितं लयमयं तत्तत्पुराणाश्रयम् ।
भाषावैभवसुन्दरं प्रविलसन्नानाविलासं कलद्[2]-
वृत्तिव्याप्तमशेषसन्धिसहितं सप्ताङ्गवन्नाटकम् ।।

अन्ये तु—

देवतानां मनुष्याणां राज्ञां लोके महात्मनाम् ।
पूर्ववृत्तानुचरितं प्रख्यातोदात्तनायकम् ।।
प्रवेशकविविष्कम्भादिभिः सन्धिभिरन्वितम् ।
इतिहासकथोद्भूतं सुखदुःखोदयैर्युतम् ।।
षट्पञ्चदशसप्ताष्टनवाङ्कैरनुभूषितम् ।
नानाविलासलीलाभिः सर्वर्तुभिरलङ्कृतम्[3] ।
नानाभावरसैराढ्यं नाटकं सूरयो विदुः ।।

किञ्चिदङ्गविहीनन्तु न त्याज्यं नाटकं क्वचित् ।।
आरम्भश्च प्रयत्नश्च[4] प्राप्तिः सम्भव एव च ।
नियता च फलप्राप्तिः फलयोगस्तथापरः ।
इत्यवस्थापञ्चकं स्यान्नाटके कार्यवस्तुनः ।।

संस्कृतं प्राकृतं भूतभाषापभ्रंशका गिरः ।
नाटके नियताः शस्ता एता भाषा रसावहाः ।।

भाषाविभाषाभेदेन प्राकृतन्तु चतुर्दश ।
मागध्यावन्तिका प्राच्या सौरसेन्यर्धमागधी ।
वाह्लिकी दाक्षिणात्या च भाषाः सप्त च प्राकृते ।।

---

[1] A दुर्म्मंका (?) [2] AB वलद् (?) [3] A सर्वसिद्धिरलङ्कृतं C सर्वसिद्धिभिरन्वितम्
[4] AC प्रयत्नञ्च

शकाराभीरचण्डा च शवर[1]द्राविडौड्रजाः।
वानौकसी विजातीनां विभाषाः सप्त कीर्तिताः॥

कैकेयी सौरसेनी च काञ्ची पञ्चालमागधी।
द्राविडी पाण्डचदेशा च भूतभाषाः प्रकीर्तिताः॥

वैदर्भी[2] मागधी लाटी काम्बोजी चोपनागरी[3]।
पाञ्चाली षडपभ्रंशभाषाः स्युर्देशभेदतः॥

देवतादर्शनान्तञ्च कर्तव्यं नाटकं बुधैः।
राजर्षिदर्शनान्तं वा तेऽपि देवैः समागताः॥

उदाहरणं मुरारिकवेरनर्घराघवम्, भवभूतेरुत्तरचरितम्, कालिदासस्याभिज्ञानशकुन्तलञ्चेत्यादि।

इति नाटकलक्षणम्॥

आत्मशक्त्या कविर्यत्र कथां नायकमेव च।
औत्पत्तिकं[4] प्रकुरुते तद्धि प्रकरणं मतम्॥

औत्पत्तिकं[5] स्वयङ्कल्पितं यदाह।

अमात्यविप्रवणिजां चरितेनैव केवलम्।
कथामुत्पाद्य विधिना[6] कृतं प्रकरणं भवेत्॥
मालतीमाधवं तत्र मृच्छकटिकमेव[7] च।
पुष्पभूषितमित्येवं तदुदाहरणं मतम्॥
शकारः कुट्टिनी चेटी धर्मशास्त्रबहिष्कृताः।
विटचेटादयो व्रात्या[8] नित्यं प्रकरणे मताः॥

उज्ज्वलवेशाभरणः कुप्यत्यनिमित्ततः प्रसीदति च।
प्राकृतभाषाचारो भवति शकारो बहुविधाकारः॥
नेपथ्येक्षणगर्भाढ्या शकारस्य गतिर्भवेत्।
शकार इति विज्ञेयः शकारप्रायभाषणात्॥

---

[1] A सवर C चाण्डाल [2] B वैदग्धी [3] B चोपमागधी [4] A औत्पातिकं
[5] A औत्पातिकं [6] A कविना [7] B मृच्छाकटिकमेव [8] A व्रात्यानि

आगमलिङ्गविहीनं देशकालन्यायविपरीतम् ।
व्यर्थै[1]कार्थमपार्थं भवति हि वचनं शकारस्य ।।

वेशोपचारचतुरा कुट्टिनी गणिका[2]प्रसूः ।
परप्रेष्या परीहासशीला चेटी च चेटकः ।।

प्रवेशकाद्यैः सन्ध्यङ्गै[3]रङ्कालङ्कारवृत्तिभिः ।
एतत् प्रकरणं प्रायो नाटकेन समं भवेत् ।।

यद्वा ।

विप्रामात्यकसार्थवाहवणिजां तत्तत्चरित्रान्वितं
चेटीचेटकधूर्तमूर्खसहितं संग्राममन्त्राञ्चितम् ।
स्वेच्छानिर्मितसङ्कथञ्च कुलजावेश्योभयस्त्रीगतं
सप्ताङ्कं दशमाङ्ककं[4] प्रकरणं प्रोक्तं यथा नाटकम् ।।

द्विधा रूपकमेतत्तु शुद्धसङ्कीर्णभेदतः ।
कुलस्त्रीचरितं शुद्धं सङ्कीर्णं वेश्यया कृतम् ।।

इति प्रकरणलक्षणम् ।।

ऐकाहिक[5]कार्यकृतः स्वल्पस्त्रीजनसंयुतः ।
एकाङ्को बहुभिः पुंभिर्युक्तो युद्धक्रियाधिकः ।।
कैशिकीरहितः स्वल्पशृङ्गारो[6] वीररसाधिकः ।
दशाधिका नरा वात्र दिव्यराजर्षिनायकः ।।
निर्वहणं प्रतिमुखं सन्धी स्याताञ्च यत्र वै ।
बहुलस्फोट[7]संयुक्तो व्यायोग इति कीर्तितः ।।

यद्वा ।

एकाङ्कं दिवसैकवृत्तवचनं[8] शृङ्गारहास्योज्झितं[9]
स्वल्पस्त्रीकमपूर्वपौरुषमयं गर्भा[10]वमर्षच्युतम् ।

[1] A व्यत्यै...... C व्रात्यै...... [2] A पालका [3] A सन्व्यङ्गै (?) [4] A दशमांक
[5] AC एकाहिक [6] B ......शृङ्गारी [7] A बहुसंस्फोट...... [8] B ......बहुलं
[9] B ......हास्यांकितम् [10] BC गर्वा......

सात्त्वत्यारभटीमयं बहुनरं स्त्रीहेतुयुद्धोज्झितं
व्यायोगं प्रवदन्ति घोरसमरं बीभत्सरौद्राश्रितम् ॥

यथा परशुरामेण पितृवधकोपात् सहस्रार्जुनवधः[1] कृतः।

इति व्यायोगलक्षणम् ॥

एकाङ्कस्तु भवेदङ्को नायिकाविभ्रमान्वितः।
रसश्च करुणः स्थायी नेतारः प्राकृता जनाः ॥
बुद्ध्यात्र कल्पयेद् वृत्तं[2] भारतीसात्वतीयुतः[3] (युतं?)।
वृथा युद्धं विधातव्यं तथा जयपराजयौ ॥
स्त्रीपरिदेवनैर्युक्तो नृपादिनेतृसंयुतः।
भाणवत् सन्धिवृत्त्यङ्गैरन्वितः ख्यातनायकः ॥

यद्वा।

पूर्वापूर्वकचित्रवृत्त[4]करणो भाणो[5]क्तसन्ध्यङ्कभृत्
प्रायः प्राकृतनायकः प्रथमतो वाग्युद्धमुद्दीपयन्।
भारत्यारचितो जयाजयपरो नीचक्रियागोचरो
यत्र स्त्रीपरिदेवनं मुनिवरैः सोऽङ्को मतो निश्चितम् ॥

इत्यङ्कलक्षणम्।

डिमस्तु चतुरङ्कः स्याद्युक्तः षोडशनायकैः।
देवदेवारिगन्धर्वपिशाचैरपि सङ्गमः (तः?) ॥
चतुर्थसन्धिरहितः कैशिकीवृत्तिविच्युतः।
उल्कापातेन्द्रजालादिमायाजालसमन्वितः ॥
षडेव हि रसा यत्र गदिताः पूर्वसूरिभिः।
बीभत्साद्भुतकरुणरौद्रवीरभयानकाः ॥
डिम संघात इत्यस्य धातोर्डिमपदोदयात्।
नायकसंघातव्यापारस्यैकत्वात् डिम उच्यते ॥

यद्वा।

गन्धर्वामरदैत्यराक्षसगणप्रेताहियक्षादयो
नेतारः कपटेन्द्रजालसमरक्रोधान्विताः षोडश।

---

[1] B सहस्रबाहुर्जनवधः [2] B वृत्ति [3] B .....युतां [4] A .....बुद्ध..... [5] AC भावो.....

हास्यो यत्र न कैशिकी न च भवेत् शृङ्गारसङ्गो[१] रसो
ज्ञातव्यश्चतुरङ्क एव स बुधैर्युक्ता[२]वमर्षो डिमः ।।
इति डिमलक्षणम् ।

ईहामृगस्तु विज्ञेयश्चतुरङ्कस्त्रिसन्धिकः ।
बलात्काररणाढ्यश्च नवविद्याधराश्रयः ।।
दिव्यस्त्रीकारणाद्यत्र संग्रामः कैशिकी[३]च्युतः ।
नायकैः षड्भिः संयुक्तो विख्यातपुरुषान्वितः ।
शान्त[४]शृङ्गारहास्यैस्तु वर्जितो हृदयङ्गमः ।।
वधप्राप्तस्य कुर्वीत वधं नैव महात्मनः ।
संरम्भं परमानीय युद्धं व्याजान्निवारयेत् ।।
अलभ्यां नायिकामस्मिन्नायको मृगवदीहते ।
रज्यतीहामृगोऽयं तन्मुनीन्द्रभरतोदितः ।।

यद्वा ।

देवानामवनीभुजाञ्च वनिताचौर्यक्रियाद्यन्वितो
दैत्यादिप्रतिनायको न च वधप्राप्तस्य घातो रणे ।
सात्त्वत्यारभटी च यत्र सकला वृत्तिर्मनाक् कैशिकी
गर्भा[५]मर्षविहीन एष कथितो वेदाङ्क ईहामृगः ।।

इतीहामृगलक्षणम् ।।

शृङ्गारहास्यबहुलं शान्त्यद्भुतरसान्वितम् ।
व्यङ्गमारभटीहीनं प्राह प्रहसनं मुनिः ।।
प्रहस्यतेऽनेनेति भवेत् प्रहसनं त्विदम् ।।
शुद्धञ्च विकृतञ्चैव सङ्कीर्णमिति तत् त्रिधा ।।

यद्वा ।

चेटीचेटकविप्रतापसविटक्षत्राङ्गनानामिदं
भाषावेशविभाषितैः परिचितं हास्यं (स्य ? ) प्रधानक्रियम् ।
प्रायो निर्वहणस्य सन्धिसहितं शुद्धाभिधं पण्डितै-
रेकाङ्कं स्फुटकैशिकं प्रहसनं सङ्कीर्तितं शास्त्रतः ।।

---

[१] A शृङ्गारभङ्गो [२] BC र्युक्ता [३] AB कैशिका...... [४] A शान्ति [५] BC गर्वा......

दूतीकञ्चुकिषण्डतापसपरिव्राडङ्गनाकामुकै-
रत्यन्तोद्धतवेशभाषितपरीहासक्रियापेषलम्[१] (पेशलम् ?)।
एकाङ्कं विकृताङ्गकं शर (स्मर ?) कथं वीथ्यङ्गकैरन्वितं
वेश्याधूर्तभुजङ्गचारुचरितं शृङ्गारहास्याश्रयम्[२]।
अप्येकाङ्क[३]मपूर्ववृत्तवचनं सन्धिद्वयेनान्वितं
सङ्कीर्णं प्रकटीकृतं प्रहसनं नूनं मुनीन्द्रैरिदम् ॥

अन्ये तु—

द्विधा प्रहसनं ज्ञेयं शुद्धसङ्कीर्णभेदतः।
शुद्धञ्च तदिह प्रोक्तं परिव्राज्तापसाश्रयम् ॥
सङ्कीर्णन्तु यदारब्धं वेश्याचेटीविटादिभिः।
मुखनिर्वहणे चात्र सन्धी ज्ञेयौ मनीषिभिः ॥
शुद्धं क्रीडासङ्कराख्यं सङ्कीर्णं भवद[४]ङ्ककम् ॥

यथा धूर्तसमागमं नाम प्रहसनम्।

इति प्रहसनलक्षणम् ॥

एकाङ्कस्तु भवेद् भाण एकनायकनायिकः।
कैशिकीवृत्तिसम्पूर्णो भूरिधूर्तप्रयोजितः ॥
आकाश[५]भाषितैरत्र कुर्यात् सम्बोधनं बहु।
सूचयेद् वीरशृङ्गारौ शौर्यसौभाग्यसम्भवौ[६] ॥
नाटचालङ्कारसम्पन्नो भूयसी भारती[७]त्विह।
भण्यन्तेऽस्मिन् गुणादेशा इति भाण इहोदितः ॥

यद्वा।

धूर्तानां दुश्चरित्रं[८] परिगतमथवा स्वानुभूतं समग्रं[९]
वीरे शृङ्गारसङ्गे द्विजसचिवविटा यत्र सङ्कीर्णयन्ति[१०]।
उक्तिप्रत्युक्तियोग्या भवति च गणना[११]वस्थितैरत्र शब्दैः
सन्ध्यङ्कौ वीथिकायाः पुनरिह कथिता भारती चेति[१२]भाणः ॥

---

[१] AB ......पेषणम् [२] B ......हास्यप्रियम् [३] C अप्येकाङ्ग...... [४] A संकीर्णस्तवदङ्ककं
[५] AC आकत्थ..... [६] A सौन्दर्यभाग्य..... [७] C तावती [८] AC दुश्चरितानां
[९] A समर्थ [१०] C सकीर्तयन्ति [११] B भवति चरणमा...... [१२] A हेति

गेयपदं स्थितपाठ्यं तथैवासीनपाठ्यकम्[१] ।
वैमूढकं[२] पुष्पगण्डी प्रच्छेदश्चोत्तरोत्तरम् ।।
उक्तप्रत्युक्तकञ्चैव विमूढं सैन्धवं तथा ।
लास्याङ्गानि[३] दशैतानि भाणनाटकयोर्विदुः ।।

वीणाभाण्डं पुरस्कृत्य गानं गेयपदं स्त्रियः ।।

चच्चत्पुटक्षतचारी पाणिकलाभूषितञ्च यत् पाठ्यम् ।
क्रियते खलु नायिकया[४] या स्थितपाठ्यं तत् समाम्नातम् ।।
पाणिकलाहस्तक इत्यर्थः ।
भ्रूकरचरणविलासाभिनयैर्युक्तं प्रपूर्यते यच्च ।
आसीनया वनितया भवति तदासीनपाठ्यन्तु ।।

वैमूढकन्तु लास्यं यत् पुंसः स्त्रीवेशधारिणः ।
यदनेककलाशालि लास्यं सा पुष्पगण्डिका ।।
यद्वा ।
पुंसामाशयबोधाय गीतजालादिविस्तृतिः[५] ।
स्त्रीकृता यत्र नृत्ये स्यादियं सा पुष्पगण्डिका ।।

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियः प्रच्छेदको मतः ।।
यद्वा ।
कान्तेऽन्यनायिकासक्ते प्रेमानुद्गमसर्पितः[६] ।
मानमन्युर्मनस्त्रासकरी[७] प्रच्छेदको मतः ।।

निकटस्थे यदा ज्ञाते प्रिये सोत्कण्ठभाषणम् ।
प्रयुज्यते नायिकया तद् भवेदुत्तरोत्तरम् ।।

---
[१] A ......पाठकम् [२] B वैमूढ़ं [३] A लास्यादीनि [४] A नासिकया (?)
[५] A ......विष्कृतिः [६] B प्रेमानुद्गतसर्पितं C पुमानुद्ग्रामसर्पितः [७] B ......करं

नायकेनोदिते वाक्ये सोपालम्भं यदुच्यते ।
व्यलीकवन्नायिकया भवेत्[1] प्रत्युक्तकं हि तत् ।।

लीलानृत्ये प्रयुक्ते तु गीतमुक्तं विमूढकम् ।
देशभाषानुगं गीतं लयतालसमन्वितम् ।।
शंखवाद्यादिसंयुक्तं लास्यं सैन्धवमुच्यते ।।

देशोऽत्र सिन्धुरेव ।

इति भाणलक्षणम् ।।

स्यान्मुखादिचतुःसन्धियुक्तः समवकारकः ।
कैशिकीवृत्तिसंयुक्तो नेतारो देवदानवाः ।
नायका द्वादश ख्याताः फलं तेषां पृथक् पृथक् ।।
यथा नारायणादीनां समुद्रमथने पुरा ।
लक्ष्म्यादिलाभः कथितः तथाऽत्रापि फलं पृथक् ।।
द्विसन्धिरङ्कः कथितः कार्यो द्वादशनालिकः ।
[2]द्विनालिकस्तृतीयस्तु द्वितीयस्तुर्यनालिकः ।।
त्रिश्रृङ्गारस्त्रिकपटस्त्र्यङ्गस्त्रिविधविद्रवः ।
वीथ्यङ्ग[3]वांश्च कर्तव्यो नात्र बिन्दुप्रवेशकौ ।
बहुवीररसाः सर्वे यद्वदम्भोधिमण्डले[4] ।
स्याद्दिव्यवस्तुकः सोऽयं नृत्ये समवकारकः ।।

नालिका स्यात् घट (टी?) द्वयम् ।

धर्मार्थकामभेदेन श्रृङ्गारस्त्रिविधो मतः ।।
विज्ञेयो धर्मश्रृङ्गार औज्ज्वल्यं शौचमित्यपि ।
उक्तमाभरणाभोग[5]स्त्वर्थश्रृङ्गार उच्यते ।
सम्भोगविप्रलम्भौ च कामश्रृङ्गार इष्यते ।।
कपटं च त्रिधा ज्ञेयं सुखदुःखोत्पत्तिकारणम्[6] ।।
वस्तुगत्याभिसम्पन्नः परतो दैवतोऽपि वा ।
सम्भ्रमोद्वेगजनको विद्रवस्त्रिविधो मतः ।।

---

[1] B नायिकयात्युक्तं...... [2] B omits the line [3] C वीण्यङ्ग.....(?)
[4] AC .....मण्डलः [5] B .....भरणारोप..... [6] AC ......कारकम्

संभ्रमजो मरुद्वह्निजलजन्तु[1]कृतोऽपि वा ।
पुरावरोधसम्भूतो विद्रवः कथ्यते त्रिधा ।।

अन्ये तु—

यत्र द्वादश देवदैत्यभुजगप्राया महानायकाः
प्रत्येकं फलभागिनो न च भवेद् बिन्दुः प्रवेशो[2] न वा ।
त्र्यङ्कः सर्वरसस्त्रिविद्रवयुतो युक्ता[3]वमर्षः स्मृतः
शृङ्गारत्रितयात्मकः समवकारोऽयं (?) चतुर्वृत्तिकः ।।
प्रचण्डानिलविध्वस्ता यत्र प्रासादभूधराः ।
त्रासयन्त्यखिलं लोकं विद्रवः स तु मारुतः ।।
अकस्मादुत्थितो वह्निः काननागारपत्तने ।
उद्वेजयति भूतानि विद्रवः सोऽग्निसम्भवः ।।
धारासारमहावर्षैरापूर्णे वसुधातले ।
लोकानां यत्र सङ्कोचः स ज्ञेयो जलविद्रवः ।।

इति समवकारलक्षणम् ।।

नानारससमायुक्ता सन्धिद्वयविभूषिता ।
अनुप्रकृतिभिः पूर्णा स्यादेकाङ्का तु वीथिका ।।
त्रिभिः पात्रैः प्रयोज्येयमुत्तमाधममध्यमैः ।
कर्तव्या नायिका चात्र शृङ्गारद्वयसंयुता ।।
उद्घातकोऽवलसितं व्याहारस्त्रिगतं छलः ।
अञ्चितासत्प्रलापौ च नाधिकाधिबल[4]स्तथा (नालिकोधिबल?) ।।
अवस्कन्दितवाग्वाण्यौ नृदरं गण्ड एव च ।
इति त्रयोदशाङ्गानि[5] वीथिनाटकयोर्विदुः ।।

प्रधानार्थप्रकाशाय[6] प्रयोगोऽप्रस्तुतस्य यः ।
तमुद्घातकमिच्छन्ति यच्च प्रश्नोत्तरोज्झितम् ।।

दास्या विटस्य वेश्याया यदन्यस्यापि कस्यचित् ।
अन्यानुरोधसम्पन्नं वचोऽवलसितं मतम् ।।

---

[1] B ......यन्त्र...... [2] B बिन्दुप्रवेशौ [3] C मुक्ता...... [4] C नालिकाधवल......
[5] B त्रयोदशाङ्कानि [6] A प्रधानात्म......

साकूतं[१] सावलेपञ्च यद्वाक्यं हास्यलेशतः ।
प्रत्यक्षानुभवारूढं व्याहारः स निगद्यते ।

यदुदाहृतन्तु वचनं त्रिप्रकारं विभाव्यते ।
हास्याख्यरससंयुक्तं त्रिगतं तत् प्रचक्षते ।।

अथवा—

स्फुटभावार्थकथनं[२] त्रिगतं परिचक्षते ।।

इष्टार्थयुक्तं यद्वाक्यं भाषते[३]ऽर्थमनीप्सितम् ।
वाक्यान्तरेण संयोगाच्छलोऽयमभिधीयते ।।

नानार्थकल्पनायुक्तं वाक्यमञ्चितमुच्यते ।।

असत्प्रलापः स प्रोक्तो यद्वाक्यं विगलार्थकम् ।

यद्वा ।

मूर्खस्य पुरतो युक्तमप्युक्तं वाक्यमादरात् ।
तेनापरिगृहीतं तदसत्प्रलाप ईरितः ।।

प्रपञ्चैर्बहुधा युक्ता हास्यलेशसमन्विता ।
प्रहेलिकेव गूढार्था नालिकेत्यभिधीयते ।।

बाध्यबाधकतापन्नं वाक्यं स्वस्य परस्य च ।
तदेवाधिबलं प्रोक्तमन्योन्यार्थविभावकम् ।।

किञ्चित्कार्यमभिप्रेत्य चातुरी वचनस्य यत् ।
सत्यभूतस्य मुनिना तदवस्कन्दितं मतम् ।।

यद्वा ।

वचनं रभसेनोक्तमन्यथा क्रियते तु यत् ।
स्वबुद्धया मुनिनोक्तं तदवस्कन्दितसंज्ञकम्[४] ।।

---

[१] A साहूतं [२] AC स्फुटभाव्यं न कथनं [३] C भाषणे [४] B ......न्दितमुच्यते C ......संज्ञितम्

एकद्वित्रिचतुष्का या[1] वाग् वाग्वाणीति कथ्यते ।।

दोषाणान्तु गुणीभावो गुणानामपि दोषता ।
विविधोक्तिसमायुक्तं नृदरं नाम तन्मतम् ।।

वचसां सम्बन्धानामन्ते यदसम्बद्धमिव निपतति[2] ।
प्रत्येति तु सम्बद्धं[3] गण्डः स तु कथ्यते सद्भिः ।।

यद्वा ।

आकस्मिककर्मसिद्धं सम्बद्धमिव यत् पदम् ।
वाचामन्ते स गण्डः स्याद् भावीष्टार्थस्य सूचकः ।।

प्रतीकारो[4] रहो हर्षः प्रातिभो[5] व्याहतस्तथा ।
इति पञ्चविधो गण्डः कथितो नाट्यवेदिभिः ।।

प्रतिक्रियान्वितस्तत्र प्रतीकार इति स्मृतः ।
रहोगण्डस्तु स प्रोक्तो निर्देश्यो यद्रहार्थकः[6] ।।
हर्षेण भाषणं यत्र हर्षगण्डः स उच्यते ।
अन्यार्थयुक्तवाक्यस्य यदन्यार्थप्रकाशनम् ।
नेपथ्यदेशे कुरुते स गण्डः प्रातिभो[7] मतः ।।
मङ्गलामङ्गलार्थस्तु विन्यासो वचसान्तु यः ।
प्रतिनायकाध्यक्षोक्तः स गण्डो व्याहतो मतः ।।

यद्वा ।

अन्यादन्यच्च वदतोर्द्वयोरपि समागमे ।
जायतेऽनिष्टमिष्टं वा स गण्ड इति कीर्तितः ।।
द्व्यर्थता यत्र वाक्यानां लेशेनापि प्रतीयते ।
शब्दभङ्गानुयातश्च लेशगण्डः[9] स उच्यते ।।

---

[1] AC ......चतुष्कायाऽथ [2] AC पतेत् [3] A प्रत्येतुं तत् सम्बन्धं C प्रत्येतुं संवशं बद्धं
[4] B प्रतीहारो [5] C प्रातितो (?) [6] B निर्देशो यस्त्विहात्मनः [7] C प्रातितो
[8] C ज्ञायते [9] A ......खण्डः

अन्ये तु—

एकाङ्कामुखकैशिकीविरचिता सर्वाङ्गसन्दीपनी
लोकख्यातकथामयी सुललिता भावैर्विभावैरपि।
दिव्यस्त्रीविषयात् समस्तकपटा भाषोपभाषान्विता
वक्त्रं निर्वहणञ्च सन्धियुगलं स्याद्यत्र सा वीथिका ।।

इति वीथिलक्षणम् ।।

कैशिकीवृत्तिसंयुक्ता नारीपरिजनोज्ज्वला ।
चतुर्थसन्धिहीना च नाटिका नृपनायका ।।
इयं शृङ्गारबहुला ततः स्यात् कैशिकीमयी।
मृद्वीयं कैशिकीवृत्तिर्न स्यादन्यरसाश्रया ।।
न कुञ्जरकराघातमात्रं सहति[1] (?) कन्दली।
नास्यां विटः पीठमर्दः सञ्चयो बाह्यसञ्चयः ।।
अन्तःपुरचरो राज्ञः ईर्षद्विद्यो विदूषकः ।
अत्र भार्याजितो राजा निभृतं[2] काममाचरेत् ।।
अन्तःपुरगतां कन्यां देवीगुप्तां यियासति ।
मन्त्रिणि न्यस्तराज्यस्तु सुखसंस्थापितः प्रभुः ।
युवा भूमिपतिः प्रायो निभृतः[3] काममाचरेत् ।।

कन्यामिह परिणयविषयां देवीगुप्तां[4]महिषीज्ञानविरहेण * * * (?)

एके तु—

चतुर्भिरङ्कैरुत्पाद्यवस्तुभिर्नृपनायकम् ।
यत् कैशिकीरसप्रायं नाटकं सैव नाटिका ।।
(?) पूर्वक्रमान्नाटकक्रमात् रत्नावली नाम नाटिका, एवमन्याश्च बोद्धव्याः।

इति नाटिकालक्षणम् ।।

गर्भामर्षविहीनन्तु मुखनिर्वहणान्वितम् ।
सूत्रधारपरित्यक्तं सर्ववृत्तिभिरन्वितम् ।।

---

[1] AC शक्नोति [2] A नित्यतः C निभृतः [3] A निर्वृतः [4] A drops देवीगुप्तां

**नियुद्धस्फोटकयुतं परिवर्तकभूषितम् ।**
**मागधीसौरसेनीवत् हीननायकचेष्टितम् ।।**
**नेपथ्ये गीतनान्दीकं पठितैर[1]प्ररोचनम् ।**
**अप्रवेशकविष्कम्भमेकाङ्कं प्रेक्षणं विदुः ।।**

यथा दमयन्तीसंहारः ।।

**यद्वा ।**

**सर्वभाषासमायुक्तं सौरसेनीप्रधानकम् ।**
**विपदन्तु[2] (?) चिन्तारचनं प्रेक्षणं हीननायकम् ।।**

यथा वालिवधः ।

**इति प्रेक्षणलक्षणम् ।।**

**दिव्यमानुषसंयुक्तो यत्राङ्केऽङ्के विदूषकः ।**
**तोटकं नाम तज्ज्ञेयं गूढनायकलक्षणम् ।।**
**पञ्चा[3]ष्टनवसप्ताङ्कं दिव्यमानुषसंगतम्[4] ।**
**तोटकं नाम तत् प्राहुर्भेदं[5] नाटकवस्तुनः ।।**

दिव्यया सह मानुषेण सङ्गतमिति समासार्थः ।।

**यद्वा ।**

**तोटः[6] स्यादिह दिव्यमानुषमयः प्रत्युल्लसत्कैशिकः**
**पञ्चाष्टाङ्कविनिर्मितः स्फुटकथस्त्यक्तोऽवमर्षेण च ।**
**सर्वाङ्गः खलु विप्रलम्भगहनो नानाकलासुन्दरः**
**ख्यातः क्ष्मापतिनायकः सुललितः क्रीडाप्रमोदादिभिः ।।**

उदाहरणं यथा विक्रमोर्वशी ।

**इति तोटकलक्षणम् ।।**

**चतुर्यमनिकायुक्तं[7] शृङ्गारेणाद्भुतेन च ।**
**प्रवेशकविहीनञ्च प्राकृतैरपि निर्मितम् ।।**
**अवमर्षविहीनञ्च शाटकं कथितं बुधैः ।।**

---

[1] A पठतैव [2] B द्विपदन्तु [3] B सप्ता...... [4] C ......संज्ञकम् [5] B प्रोक्तं भेदो
[6] A डौढाः(?) C तोटः [7] B ......यमनिकं प्रोक्तं

शाटकं प्राकृतश्लोकस्तन्मयत्वाच्च शाटकम् ।
यमनिका परिच्छेदविशेषोऽङ्कवदिष्यते ।
कर्पूरमञ्जरी चात्र दृष्टान्तत्वेन कीर्तिता ।।
शाटकं[1] नाटिकावत् स्यादित्युक्तं भरतेन च ।
पात्रमुत्तममत्रापि प्राकृतोक्तैर्न चाधमम् ।।

यद्वा[2] ।

शाटः[3] स्यादिह नाटिकासमगुणः शृङ्गारभेदोज्ज्वलो
रम्यः प्राकृतभाषया विरचितो नित्यं चतुःसन्धिकः ।
किन्त्वेकोऽत्र विशेष एव भवति प्रायो न[4] विष्कम्भको
नो वा स्यादिह हि प्रवेशकविधिः कार्यो मनागद्भुतः ।।

इति शाटकलक्षणम् ।।

एकाङ्का कथिता गोष्ठी कैशिकीवृत्तिसंयुता ।
सम्भोगरससम्बद्धा[5] षट्पञ्चयोषिदन्विता ।।
प्राकृतैर्नवभिः पुंभिर्दशभिर्वाऽप्यलङ्कृता ।
गर्भावमर्षसन्धिभ्यां हीना प्राकृतसम्मता ।
बाह्यार्थै[6]रन्विता नैव (चैव?) कर्तव्येयं विचक्षणैः ।।

यथा सत्यभामा ।

इति गोष्ठीलक्षणम् ।।

हास्यशृङ्गारकरुणहीनः पाषण्डनायकः ।
त्र्यङ्कोऽथ चतुरङ्को वा कैशिकीभारतीच्युतः ।।
पुरोऽवरोध[7]संग्रामविद्रवैः कपटैर्युतः ।
अमर्षप्रतिमुखाभ्यां हीनः संलाप उच्यते ।।

यथा मायाकापालिकः ।

इति संलापलक्षणम् ।।

---

[1] B शाटका [2] AC अन्ये तु [3] C शटकं [4] C प्रायेण [5] A ......सम्बन्धा
[6] C वाद्याद्यै...... [7] B पुरोपरोध......

हास्येतररसैर्युक्तः शिल्पको[१]विप्रनायकः ।
चतुरङ्कः श्मशानाभिभयो हीनोपनायकः (?) ॥
चतुर्वृत्तिर्भवत्यत्र त्वङ्गानि सप्तविंशतिः ।
उत्कण्ठा चावहित्थञ्च प्रयत्नः प्रथनन्तथा ॥
आलस्योद्वेगसन्देहतर्काशंसाविमुग्धताः ।
विलापो विस्मृतिर्वाम्यं तापश्च प्रतिपत्तिका ॥
साधनानुगमोच्छ्वासाश्चमत्कारश्च विस्मयः ।
वैशारद्यं तथा लोभ[२] (लाभ?) संस्फोटौ[३] च प्रबोधनम् ॥
हर्षः प्रशस्ति[४]राश्वास इतीहाङ्गानि तानि वै ॥

एतेषां लक्षणमूहनीयम् ।

इति शिल्पक[५]लक्षणम् ॥

उदात्तनायकैकाङ्का कैशिकीभारतीयुता ।
सूक्ष्मालङ्कारवद्धीनपुरुषाः स्यादियं पुनः ॥
सप्ताङ्गसङ्गता भाणी तानि चाहुरिमानि तु ।
समर्पणमुपन्यासो विन्यासः साध्वसस्तथा[६] ॥
विबोधश्चानुवृत्तिश्च संहारश्चेति तानि वै ॥

एषां च लक्षणमूहनीयम्[७] ।

अन्ये तु—

अन्यचित्रकचैकाङ्गा दशलास्याङ्गशोभिता (?) ।
भाणी शृङ्गारसम्पन्ना पीठमर्दादिरञ्जिता ॥
विटविदूषकौ । (?)

इति भाणीलक्षणम् ॥

हल्लीसकन्तु सप्ताष्टदशस्त्रीजनसङ्कुलम् ।
एकोऽङ्क एकनेतात्र कैशिकीवृत्तिभूषितम् ॥
स्यादुदात्तोक्तिबहुलं बहुताललयात्मकम् ॥

इति हल्लीसकलक्षणम् ॥

---

[१] C शिल्पिका...... [२] B लेख...... [३] C ......संकोटौ [४] C हर्षप्रशस्ति......
[५] B शिल्पिक...... [६] BC साध्यसन्तथा [७] B लक्षणमेषामूह्यम्

सूत्रधारविहीनन्तु स्यादेकाङ्कन्तु रासकम् ।
उत्कृष्ट[1]नान्दीसंयुक्तं कैशिकीभारतीयुतम् ॥
त्रिसन्धिकं पञ्चपात्रं युक्तं भाषाविभाषया ।
वीथ्यङ्गमण्डितं मुख्य[2]नायिकं ख्यातनायकम् ॥
मूर्खोपदेशसम्बद्धं गर्भा[3]मर्षविवर्जितम् ।
उदात्तभावविन्यासमुत्तरोत्तरसंश्रितम् ॥
केचिद्वदन्ति गोपीनां[4] क्रीडारासकमित्यपि ॥
इति रासकलक्षणम् ॥

एकाङ्कं त्रितयाङ्कं वा चतुरु(रो?) ज्ज्वलनायकम् ।
शृङ्गारहास्यकरुणयुक्तमुज्ज्वलनायिकम्[5] ॥
बहुसङ्गीतसञ्चारं शिल्पकाङ्ग[6]विभूषितम् ।
बहुपुष्पं त्र्यस्रगीतमयं रसविमिश्रितम् ॥
समुद्रा[7]कं जलाधारं बहुप्रस्तावसङ्गतम् ।
उल्लापकमिदं प्राह भरतो मुनिसत्तमः ॥
इत्युल्लापकलक्षणम् ॥

एकाङ्कं[8] भारतीप्रायं ख्यातनायकनायिकम् ।
यत्रासीना तनोति स्त्री करुणं गानपाठयोः ॥
गर्भा[9]वमर्षसन्धिभ्यां शून्यं ख्यातोदात्तनायकम् । (?)
एतच्छ्रीगदितं प्राह भरतो मुनिसत्तमः ॥
इति श्रीगदितम् ॥

कैशिकीवृत्तिबहुलं बहुताल[10]लयान्वितम् ।
दासादिनायकं द्व्यङ्कं दासीनायिकमेव च ॥
सीधु[11]पानादिसंयुक्तं तथा हीनोपनायकम् ।
त्रि(?)शृङ्गारसमायुक्तं प्रस्थानमिति कीर्तितम् ॥
इति प्रस्थानलक्षणम् ॥

हास्यशृङ्गारभूयिष्ठं दशलास्याङ्गभूषितम् ।
उदात्तनायकञ्चैव पीठमर्दोपनायकम् ॥

---

[1] A उत्क्रुष्टं [2] AC मुख्यं [3] BC गर्वा...... [4] AC गोपानां [5] A ......नायकम्
[6] A शिल्पकाङ्क...... C शिल्पिकाङ्ग...... [7] A समुद्र [8] A एकाङ्गं [9] BC गर्वा......
[10] A .....तान..... [11] A शीधु......

यत्र वासकसज्जा तु नायिकोदात्तनायका[१]।
नाट्यरासकमेकाङ्कमिदमाह महामुनिः ।।

इति नाट्यरासकलक्षणम् ।।

दुर्मल्लिका चतुरङ्का कैशिकीभारतीयुता।
न्यूननायकसंयुक्ता गर्भशून्या सनागरा ।।
त्रिनालिकः प्रथमोऽङ्को विटक्रीडामयो भवेत्।
द्वितीयः पञ्चनालिः स्याद् विदूषकविलासवान् ।।
षण्णालिक[२]स्तृतीयः स्यात् पीठमर्दविलासवान्।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः ।।

कश्चित् तु तृतीयतुर्यौ दशनालिका[३]वित्याह।

इति दुर्मल्लिकालक्षणम् ।।

शृङ्गारबहुलैकाङ्का त्रिसन्धिर्न्यूननालिका।
विदूषकविटोपेता पीठमर्दसमन्विता ।।
दशलास्याङ्गसम्पन्ना स्वल्पवृत्तिर्मनोहरा।
सलेपाख्या तु गदिता लासिका[४] मुनिना सदा ।।

इति लासिका[५]लक्षणम् ।।

काव्य[६]मारभटीहीनमेकाङ्कं हास्यसङ्कुलम्।
गर्भावमर्षसन्धिभ्यां हीनं शृङ्गारभूषितम् ।।
खण्डमात्रा द्विपद्दिका भग्नतालैरलङ्कृतम्।
वर्णमात्राच्छदुलिका[७]भूषितं चतुर्वृत्तिमत् (?)।।
गद्यते काव्यमेतत्तु भरतेन महात्मना ।।

इति काव्यलक्षणम् ।।

नाटकलक्षणं पञ्चसन्धिविशेषितमुक्तम्। तत्र सन्धयः कथ्यन्ते।

पूर्णञ्चैव प्रशान्तञ्च[८] भास्वरं[९] ललितं तथा।
समग्रमिति विज्ञेया नाटके पञ्च सन्धयः ।।

---

[१] A .....नायकाः C .....नायिका [२] A षडनालिक..... [३] B ......नाडिका...... C ......नायिका...... [४] C नालिका [५] C नालिका...... [६] A वाच...... C वाचा...... [७] B छगलिका...... C छद्मनिका...... [८] C प्रशस्तञ्च [९] C भासुरं

एता[1] अपि पञ्चधा—

मुखं प्रतिमुखं गर्भो ह्यवमर्षस्तथैव च ।
निर्वहणञ्चेति पूर्णजातौ स्युः पञ्च सन्धयः ।।
प्रार्थना विषयौत्सुक्यमारम्भो हेतुचिन्तनम् ।
बीजं साध्योपगमनं मुखसन्धावितीरितम् ।।
लाभः साधनसम्पत्तिः प्रसरः प्रसृतिक्रिया ।
बिन्दुः साधनसम्बन्ध इति प्रतिमुखे मतम् ।।
सम्भोगो योग्यता भद्र उद्भेदः[2] सन्धिदर्शनम्[3] (?) ।
मित्र[4]सम्पत् पताकेति बुधैर्गर्भे प्रकीर्तितम् ।।
नाशः कारणमाधुर्यं किञ्चित् श्रेयसि विघ्नता ।
एतान्यवमर्षसन्धौ कथितानि मनीषिभिः ।।
पुनर्बीजस्य सम्पत्तिर्नानाभूतार्थसम्भवा[5] ।
निर्वहणसन्धौ कथिता सूरिभिर्भरतादिभिः ।।

मुखस्य अङ्गानि—

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
परिभावना विधानं समाधानञ्च कारणम् ।
भेदोद्भेदौ युक्तिप्राप्ती अङ्गानि द्वादशैव हि ।।

इति मुखलक्षणम् ।

प्रतिमुखाङ्गानि यथा—

नर्म नर्मद्युतिर्वज्रं शमनं पर्युपासनम् ।
परिसर्पो विलासश्च पुष्पं प्रणयनं (प्रगयणं? ) तथा ।।
निरोधो वर्णसंहार उपन्यासो विधूतकम् ।
अङ्गानि त्रयोदशैतानि कथितान्यत्र सूरिभिः ।।

इति प्रतिमुखलक्षणम् ।।

गर्भाङ्गानि यथा—

रूपोदाहरणे मार्गो भूता[6]हरणसम्भवौ[7] ।
अनुमानं क्रमश्चैव प्रार्थना तोटकं तथा ।।

---

[1] B एते [2] AC तत्र तद्भेदः [3] C सन्निदर्शनम् [4] BC मित्रं [5] C ......सम्भवः
[6] A मार्गोऽभूता...... [7] BC ......संभ्रमौ

उद्वेगः सम्भ्रमश्चापि[1] बलञ्चाक्षिप्तमेव च ।।
गर्भे त्रयोदशाङ्गानि कथितानि मनीषिभिः ।।
इति गर्भलक्षणम् ।।

अवमर्षाङ्गानि यथा—

अववादश्च संस्फोटो व्यवसायप्रसङ्गकौ ।
छलनद्रवने शक्तिविरोधक्षतिविद्रवाः ।।
प्ररोचना विचलनमादानञ्चेति तत्त्वतः ।
त्रयोदशाङ्गान्येतानि अवमर्षे मतानि वै ।।
इत्यवमर्षलक्षणम् ।।

निर्वहणाङ्गानि यथा—

अर्थश्च ग्रथनञ्चैव निर्णयः परिभाषणम् ।
कृतिः प्रसाद आनन्दः समयश्चानुयोगकः[2] ।।
भाषोपगुहने[3] पूर्वभावः काव्योपसङ्गतिः[4] ।।
प्रशस्तिश्चेति निर्वहणाङ्गान्यपि चतुर्दश ।।
इति निर्वहणलक्षणम् ।।
इति पूर्णजातिसन्धयः उक्ताः ।।

न्यासस्तस्य समुद्भेदो बीजोक्तिर्बीजदर्शनम् ।
अनुद्दिष्टश्च[5] संहारः प्रशान्तजातौ(ति?) सन्धयः ।।

प्रशान्तादिजातिसन्धीनां विशेषभेदप्रकारोऽङ्गविस्तारश्च बाहुल्यभयान्न कृतः ।

इति प्रशान्तादिसन्धिलक्षणम् ।।

यथासन्धि तु कर्तव्यान्येतान्यङ्गानि नाटके ।
सन्धावर्थवशादेकविंशतिः स्युः प्रदेशकः ।।
सामभेदौ वधो दानं दण्डः साहससाध्वसे ।
प्रत्युत्पन्नमतित्वञ्च गोत्रस्खलनमेव च ।।
धीर्माया च क्रोधरुजे भ्रमसम्बरणे तथा ।
दूतो[6]पधी मदश्चित्रं स्वप्नो हेत्ववधारणम् ।
एते नियोज्याः सन्धीनां प्रदेशा एकविंशतिः ।।

---

[1] A संग्रहश्चाधि...... [2] B ......नुयोगतः [3] B भाषोपग्रहणा...... [4] BC ......संहृतिः
[5] A अनुदितश्च [6] AC भूतो.....

यावन्तो योजयितुं शक्या योज्या[1]स्तावन्त एव हि ।
लेखोक्तिराकाशवचनमन्तरा सन्धिषु स्मृतम् ।
त्यक्त्वा[2]निर्वहणं कार्यं पताकास्थानमेव च ।।

प्रथमं पताकास्थानम् ।

वचः सातिशयं श्लिष्टं द्वितीयं वाच्यबन्धगम् ।
अर्थोपक्षेपणं श्लिष्टं प्रत्युत्तरयुतं[3] परम् ।।

परं तृतीयम् ।

चतुर्थस्तुल्यचिन्ताया भावेनान्यनियोजनम् ।
अन्यस्थानं चतुष्कस्य[4] चतुःसन्धिषु कुत्रचित् ।
निवेशः स्वप्ननेपथ्याकाशवाक्यादनन्तरम् ।।

भाणेहामृगनाटकप्रहसनव्यायोगनाट्यादरो
यो वीथीडिमरूपकप्रकरणेषूत्तुङ्गलीलालयः ।
गोपीभिः सममुच्चकैः[5] समवकारे दैवकीनन्दनः[6]
सोऽपीत्थं दशरूपके दशतनुः क्रीडां जिहीतेऽधिकाम् ।।

अपि च—

तोटं शाटकनाटिके नटतनुर्हल्लीसकं रासकं
शिल्पोल्लापकनाट्यरासकमथ प्रस्थानसंलापकौ ।
गोष्ठीप्रेक्षणलासिका मधुरिपुर्दुमल्लिकाभाणिका-
काव्यश्रीगदितानि तानि तनुते[7] रङ्गे कुरङ्गीदृशाम् ।
इति नृत्ये रत्ननक्षत्रमाला ।।

ख्यातो यः कविचक्रवर्तिपदतो विद्याघनैरञ्चितः
सौभद्रेयमिमं यमर्जुनयशाः सोऽजीजनच्छ्रीधरः ।
तस्य श्रील-शुभङ्करस्य भणितौ सङ्गीतदामोदरे
बंहीयान्[8] स्तवकोऽङ्गहारनटनोद्गारैस्तुरीयोऽगमत् ।।

इति चतुर्थस्तवकः ।।

---

[1] A शक्यो योज्यो C शक्त्या योज्या [2] AC त्यक्त.... [3] B ......मतं C ......जितं
[4] C अन्यस्थानचतुष्कस्य [5] A drops सममुच्चकैः C reads the line thus : गोपीभी रतिसङ्गरे सुरगुरुः श्रीदेवकीनन्दनः [6] A देवकी...... [7] A चानुवहते C चानुपहते
[8] B रूपाढ्य......

## पञ्चमस्तवकः

### अथ गायनदोषाः ।

**लज्जितं भीतमुत्कृष्ट[1]मव्यक्तमनुनासिकम् ।**
**काकस्वरः शिरःकम्पो लयस्थान[2]विवर्जितम् ।।**
**विस्वरं विरसञ्चैव विश्लिष्टं विषमाहृतम् ।**
**व्याकुलं तालहीनञ्च गातुर्दोषाश्चतुर्दश ।।**

दोषाभावप्रतियोगितया दोषा एवोदाहृता । निर्दोषं यद् गानमित्युक्ते[3] के गानदोषा अर्थादेते दोषा इत्याशयः[4] ।

**निर्दूषणं गायति रक्तकण्ठे कृष्णे पिके चोपवनोपकण्ठे[5] ।**
**संशेरते न स्वरवर्णसाम्यात् कस्तूरिकाचार्चिषि[6] (?) घोषदोषाः ।।**

### अथालतयः ।

**स्थायीत्यादि मुनीन्द्रेण चतुर्धालतिरुच्यते ।।**

**स्थायी सञ्चारी आहारी कापालिनी[7] इत्यलतयश्चतस्रः ।**

अलतिरिति अलेरतिरित्यतो वह्विवस्यर्तिभ्यश्चिदित्यत्र सूत्रेऽतिरनुवर्तते, वहति वसतिवद् बाहुलकात् अलतेरप्यतिप्रत्ययात् । अलतिर्गीतमात्रिकेत्युणादिवृत्तावुज्ज्वलदत्तः।

**राजराजेश्वरं कृष्णं ऋथकैशिकनीवृति (?) ।**
**अस्तौच्चतुर्मुखो गानैस्तेनालतिचतुष्टयी ।।**

### अथ लयाः ।

**हृदि स्थितिः, कण्ठस्थितिः, कपालस्थितिरिति लयत्रयम् ।**
**अपरे तु—**
**द्विपदी स्यात्त्वलतिका झल्लकच्छिन्नखण्डिकाः ।**
**वामध्रुवस्ततश्छित्त्वा खण्डधारा[8]फडक्ककः ।।**

---

[1] A भीतयुक्तेषु [2] A लयस्ताल...... [3] C निर्दोषं गानमित्युक्तत्वात् [4] C इति कथिताः [5] B ......वनोपकण्ठ [6] B कस्तूरिकावारिधि...... C कस्तूरिकाचाच्चिरि (?) [7] B कपालिनी [8] B खण्डकारा......

जम्भट्टिका[1] कलतिकः खण्डकः खुरिकस्तथा ।
कथितश्चतुरस्रोऽर्धचतुरस्रोऽथ नर्तकः ॥
त्र्यस्रः षष्ठचुल्लालनाऽवकृष्टा[2] मल्लवटी[3]त्यपि ।
कादम्बश्चर्चरी घट्टामिश्रोर्धवणिता[4] ततः ॥
अतिचित्रः समग्रश्च वणितोर्धदलन्तथा ।
आविद्धस्तु टङ्गरकस्ततश्चित्रविचित्रकौ ॥
भ्रान्त्री विकृतधारा च मुकुलोऽथ विलोलकः ।
रमणीयस्ततश्चैव करकण्टकसंज्ञकः ॥
चत्वारिंशदिमे[5] प्रोक्ता लयालयविशारदैः ।
लयेन वश्यो भगवान् लये लीनो जनार्दनः ॥

अथ रसाः ।

रसभावसमुत्पन्नावस्थानुकरणन्तु यत् ।
लयमानसमारब्धं तन्नाट्यमिति कीर्तितम् ॥

अथ कोऽयं रसो नाम? तत्र इच्छैव रस इति केचित् । तन्न, भोजनादीच्छायामतिव्याप्तेः । इच्छाविशेषो रस इति चेत्, न, तदनिर्वचनीयत्वात् । अहङ्कारो रस इति चेत्, न, शान्तादावव्याप्तेः । व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रस इति चेत्, न, रसभावयोर्भरतेन पृथगभिधानात् । कस्यचिन्मते शान्तरसेऽपि प्रकृतलक्षणायोगात् । न हि शान्ते कश्चित् स्थायी भावो (अस्ति?) ।

न भावो रसहीनोऽस्ति न रसो भाववर्जितः ।
परस्परकृतासिद्धिरनयोः रसभावयोः ॥

इति रसभावयोर्भेदाच्च ।

मैवम् । रत्याद्यंशानुविद्ध—ब्रह्मास्वादसहोदर-स्वेतरविषयाच्छादक-पानकरसप्रायानिर्वचनीय[6]-सर्वाङ्गीनस्वप्रकाशचमत्कारो[7] रस इति सिद्धान्तात् । तथा च स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवनावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीनमिवालिङ्गन् अन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन्नलौकिक-

[1] B उद्घट्टिका [2] C ......कृष्णा [3] C .....घटी [4] B मिश्रार्धवलिता (?)
[5] C ......दिति [6] A ......निर्वहमीय [7] A ......चमत्कार......

चमत्कारकारी शृङ्गारादिको रसः। अनेकरसमिश्रो यो रसः स पानकरसः। यथा दुग्धसितशर्कराचम्पककदल्यादिमिश्रो यो रसः सोऽनिर्वचनीय एव। वस्तुतस्तु सांख्यमते कार्यकारणयोरभेदाद्व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृत इत्येव लक्षणं साधीयः। विभावानुभावव्यभिचारिसंयोगाद्रस-निष्पत्तिरिति भरतसूत्रस्याप्यत्रैव तात्पर्यात्। अथैतदन्येऽपि वदन्ति, भावा एवाभिसम्पन्नाः प्रयान्ति रसताममी इत्येतावता विभावाद्युपजीवननिष्पन्नः स्थायीभावपरिणामो रस इति तात्पर्यार्थः। परिणामस्तु वृद्धेः पराकाष्ठा[1]। तस्यैव[2] हि रत्यादेरङ्कुरायमानतायां स्थायिभावत्वं सहकारिलाभक्रमेण वृक्षाय-मानतायां रसत्वमिति। ननु भावविभावहीनोऽयं[3] शान्तस्तु नवमो रस इति कस्यचिद्वचनात् स्थायिभावाभावात्तत्परिणामत्वाभावेन शान्तस्य रसत्वं कथमिति? तत्रोच्यते, अस्मन्मते शान्तरसेऽपि शमनाख्यः[4] स्थायिभावोऽस्तीति। कस्यचिन्मते रसभावयोर्बीजाङ्कुरन्यायेन परस्परं जन्यजनकभावः।

तथा च—

आलम्बनविभावेभ्यः स्वेभ्यः स्वेभ्यः समुल्लसन्।
रसो रत्यादिरूपेण भाव इत्यभिधीयते॥
व्यञ्जनौषधिसंयोगाद्यथान्नं तावकं[5] भवेत्।
एवं भावरसाश्चैव भावयन्ति परस्परम्॥ इति।

शृङ्गारहास्यकरुण[6] रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः॥
शृङ्गाराज्जायते हासो रौद्राच्च करुणोदयः।
भयानकोऽपि बीभत्साद्वीराद्युत्पद्यतेऽद्भुतः॥
शत्रू शृङ्गारबीभत्सौ शत्रू वीरभयानकौ।
शत्रू रौद्राद्भुतौ शत्रू हास्यकरुणकौ मिथः॥
मधुरादिरसोपेतैर्व्यञ्जनैरोदनं यथा।
आस्वादयन्ति कृतिनस्तथा भावान्[7] रसैः पृथक्॥
शृङ्गारो रतिसम्भूतो हास्यं हासादजायत।
करुणः शोकतो जातः क्रोधो रौद्रसमुद्भवः॥

---

[1] A कलाकाष्ठा [2] B अस्यैव [3] A नत्वविभावहीनोयं [4] C शमनामा
[5] AB यथार्थ भावकं [6] B करुणा [7] A भावाद्

उत्साहाद्वीरसम्भूतिर्भयादेव भयानकः ।
जुगुप्सायास्तु बीभत्सो विस्मयादद्भुतोद्गमः ।।
शमोऽव्यक्तरसः प्रोक्तस्तस्माच्छान्तो भवेदिह ।
एवं भावा रसाश्चैव संभवन्ति परस्परम् ।।

शम्भोः पश्चिमवदनाद्धास्यशृङ्गारसम्भवः ।
उत्तराद्वदनादेव वीरसंज्ञो रसोऽभवत्[1] ।।
भयानकश्च बीभत्सो दक्षिणाद्वदनाद् भवेत् ।
पूर्ववक्त्राच्च संयातौ रौद्राद्भुतौ रसावुभौ ।।
पञ्चमाद्वदनाज्जातः करुणः शान्तरसोऽपरः ।
विभावभावहीनोऽयं नवमो रस इष्यते ।। इति केचित् ।

शृङ्गारः श्यामवर्णोऽयं कथितो विष्णुदैवतः ।।

तथा च—

कृष्णानि केशवः केशकस्तूरीकाचकोकिलाः।
कालीकज्जलकालिन्दीकोलेन्दीवरकुञ्जराः ।।
तालाङ्कचीरचन्द्राङ्कमदपङ्कमसीनिशाः ।
अतसीतिमिराकाशकटाक्षयमराक्षसाः ।।
कुहूराहू[2]रगाम्भोदवनभैरवसागराः ।
विन्ध्याञ्जनगिरिव्यासरामधूमधनञ्जयाः ।।
केकिखञ्जनरोलम्बमस्तकागुरुवल्लयः[3] ।
द्रुमद्रुपदजाभल्लभिल्लपापकुकीर्तयः ।।
नीलीजम्बु[4]फलच्छायाकाककृत्याकनीनिकाः ।
तमालतालगुञ्जास्यराजपट्टाविदूरजम् ।।
गोलाङ्गुलास्यगवलतिलाङ्गारशनैश्चराः ।
रसा अद्भुतशृङ्गारभयानकभिदा त्रयः ।।
हरकण्ठो विषं शस्त्री खलान्तःकरणं कलिः ।
भल्लातकं गुर्विनीनां स्तनाग्रमसुरादयः ।।

---

[1] C भवेत् [2] A ......राकू...... [3] A ......वल्वयः [4] C जम्वू......

नायिकानायकानाञ्च विश्लेषो वियोगः स्मृतः(?) ॥
चित्ते (त्रे?) विलोकनं सख्या स्वस्थाने कथनक्रिया ।
विलापोऽनङ्गलेखार्ति[१]मूर्छा निर्विरहे सति ॥

शृङ्गारे च रतिः स्थायीभावः पुष्पविभूषणम् ।
उद्यानगमनं वारिविहारश्चन्दनादिकम् ॥
विभावास्तस्य विज्ञेया एवमन्येऽपि च क्रमात् ।
व्याधिः स्तम्भस्तथोन्मादो निर्वेदो जडता मदः ॥
निद्रा ग्लानिः श्रमः शङ्काऽसूया वैवर्ण्यमेव च ।
चित्तौत्सुक्यमपस्मारो भावा स्युर्व्यभिचारिणः ॥

चारुलोचनलीलाभिर्भ्रूक्षेपैः कण्टकादिभिः ।
स्मितैरलक्ष्यदन्ताग्रैर्ललितैरङ्गहारकैः ॥
एभिः सम्भोगशृङ्गारे द्रष्टव्या[२]भिनयक्रिया ॥

शङ्काऽसूयामदग्लानिनिर्वेदैर्मूर्छनादिभिः ।
निद्रालज्जाविलासाद्यैरौत्सुक्योन्मादमिश्रितैः ॥
विप्रलम्भाख्यशृङ्गारे कर्तव्योऽभिनयो बुधैः ।
शृङ्गारे द्विविधे चैव भरतेऽभिनयः स्मृतः ॥
इति शृङ्गारः ॥

हास्यरसो यथा—

हास्यं नाम रसः शिवप्रियतमो हासाभिधाद् भावतो
हर्षादप्यनुभावतः सुखमयः सम्पद्यते पञ्चधा ।
स्त्रीणाञ्च प्रकृतिर्निगूढविषयग्रामप्रकाशप्रियः
शृङ्गारानुगतः स्वयं निगदितो दैवेन कामद्विषा ॥

स्मितं विहसितञ्च स्यादट्टहासस्तथापरः ।
उपहासः प्रहासश्च हास्यं पञ्चविधं स्मृतम् ॥

---

[१] A ......रेखार्ति......  [२] C कर्तव्या......

ईषद्विकाशिवदनं किञ्चिच्चलितलोचनम् ।
अप्रकाशितदन्तौष्ठं स्मितमित्यभिधीयते ॥

यन्नेत्रभ्रमणं सरोजदलवद्दन्तच्छदा संवृति-
गात्रे वेपनमानने विकचता श्वासे गतञ्चागतम् ।
किञ्चित्किञ्चिदवेक्ष्यमाणदशनं फुल्लञ्च नासापुटं
शीर्षाकम्पितमुत्तमं विहसितं तत् कीर्तितं शम्भुना ॥

असम्बृतमुखं हास्यं निर्लज्जं दुर्निरीक्षितम् ।
प्रचण्डाट्टरवं भूयानट्टहास उदाहृतः ॥

दन्तानामवलोकनं प्रचलता गात्रे विकाशो दृशोः
प्रोत्फुल्लाऽपि च नासिकाऽथ जठरः फुल्लः प्रकम्पो भवेत् ।
वक्त्रं स्याद्विकृतं शिरः प्रचलितं तद्वत्तनौ पीनता
तत्पूर्वं कथितं पुरोपहसिते लिङ्गं तदङ्गादिना[१] ॥

कदाचित् पतनं[२] भूमावुत्थानं करतालनम्[३] ।
प्रहासे कथितं लिङ्गं स विदूषकसंश्रयः ॥

सितः पुरा विप्रकुलप्रसूतश्चापल्ययुक्तो बहुभावजातः ।
विचित्रवासाः प्रचलद्द्विनेत्रो हास्याभिधानः शिवतो रसः स्यात् ॥

शुक्लवर्णो हास्यरसः प्रोक्तः प्रथमदैवतः ।

तथा च——

सितानि कुन्दपारीन्द्रपुरन्दरगजेन्दवः[४] ।
केतकीहारमन्दार[५]यशोमन्दाकिनीदिवः ॥
चामरोच्चैःश्रवःशेषशङ्खशङ्करनारदाः ।
पारदेभरदच्छत्रध्वजसौधसुधाहिमम् ॥

[१] A तदज्ञानिना (?) [२] B पातनं [३] BC ......चालनम् [४] C ......गजेन्द्रकं
[५] A .....मल्लार......

हिमाद्रिलोध्रकैलासकासकार्पासनिर्झराः ।
कौमुदीकुमुदागस्त्यसिकताहंसशुक्तयः ।।
भस्मोर्णनाभतन्वस्थिवराटीचूर्णमभ्रकम् ।
सूर्येन्दुकान्तरजतदन्तनिर्मोकसीरिणः ।।
प्रासादपुरनक्षत्रमुक्ताकुसुमलाजकम् ।
करम्भकदलीगर्भमृणालजलभार्गवाः ।।
दधिदुग्धे हास्यरसः शर्करागुणहीरकम् ।
मल्लिकाकरकाराका[1]वलाकाहिमवालुकाः ।।
श्रीखण्डगण्डहिण्डीरपुण्डरीकशरद्घनाः[2] ।
खटिकापटपुण्यानि सिन्धूत्थं स्फटिकादयः ।।
हस्तमुक्तावलीकर्तुरियं कविमुदे कृतिः ।।

शुक्लत्वं कीर्तिहासादौ कार्ष्ण्यञ्चाकीर्त्यघादिषु ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि ।।
प्रतापे रक्ततीक्ष्णत्वे रक्तत्वं क्रोधरागयोः ।
विभावर्यां भिन्नतटीश्रयणं[3] चक्रवाकयोः ।।
रत्नानि यत्र तत्राब्धौ हंसाद्यल्पजलाशये ।
तिमिरस्य तथा[4] मुष्टिग्राह्यत्वं सूचिभेद्यता ।।
अञ्जलिग्राह्यता कुम्भोपग्राह्यत्वं विधुद्विषः[5] ।
ज्योत्स्नापानं चकोराणां चतुष्कत्वं पयोनिधेः ।
असन्निबन्धे कथितमिदं पूर्वमनीषिभिः ।।

वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने ।
अशोके च फलं ज्योत्स्नाध्वान्ते कृष्णान्यपक्षयोः ।।
कामिदन्तेषु कुन्दानां मुकुलेषु च रक्तताम् ।
हरितत्वं दिवा नीलोत्पलानाञ्च विकाशितम् ।
वर्णयेन्नसदप्येतन्नियमोऽथ प्रकाश्यते ।।

---

[1] B ......करकावार्क......(?) [2] A ......पुण्डीरकशरद्घनाः (?) [3] C ......तटाश्रयणं
[4] A यथा [5] AC मधुद्विषः

भूर्जत्वग्हिमवत्येव मलयेष्वेव[१] चन्दनम् ।
सामान्यग्रहणे (?) शौक्ल्यं छत्राम्भः[२] पुरवाससाम् (पुष्पवास-
साम् ?) ।।

कृष्णत्वं केशकाचाहिपयोनिधिपयोमुचाम् ।
रक्तत्वं रक्तबन्धूकजवा[३]म्भोजविवस्वताम् ।।
तथा वसन्त एवान्यपुष्टानां कलकूजितम् ।
वर्षास्वेव मयूराणां रुतं नृत्यञ्च वर्णयेत् ।।

इत्यसन्निबन्धसदनिबन्धजात्यादिनियमसंज्ञकेषु कवीनां त्रिविधसमयेषु नाटकादिषु[४] वर्णनीयम् । हास्ये शुक्लत्वं दर्शितं प्रामाण्याभ्युपगमाय ।

अन्ये तु—

स्मितञ्च हसितञ्चैव विहसितमवहसितम्[५] ।
भवेत् प्रहसितञ्चापि तथातिहसितं[६] मतम् ।
सद्भावसंश्रितं[७] हास्यमेवं षड्विधमुच्यते ।।

हासाद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितैः ।
ईषद्गलितदन्तांशु नायकानां स्मितं भवेत् ।।

सस्वनं रमणीयञ्च किञ्चिदाकुञ्चितेक्षणम् ।
प्रौढानुरागसंभिन्नं जायते हसितं सताम् ।।

ईषदाकुञ्चितापाङ्गं फुल्लगण्डस्थलोज्ज्वलम् ।
सानुरागाननाभोगयुक्तं विहसितं नृणाम् ।।

हस्तावृतमुखं स्फीतं प्रफुल्लवदनेक्षणम् ।
आकुञ्चितकपोलान्तं तथावहसितं मतम् ।।

सकम्पजठरं साश्रुरक्तनेत्रावलोकनम् ।
विनष्टसौष्ठवं मन्दै[८]र्जनैः प्रहसितं मतम् ।।

---

[१] B ह्येव [२] C छत्रान्तः...... [३] B रत्नबन्धुकविम्बा...... [४] A नाटकादि
[५] B तथा विहसितं पुनः [६] B तथाभि हसितं [७] B ......सम्बृतं [८] A मल्लै......(?)

उत्फुल्लनासिकारन्ध्रमालोहितमुखेक्षणम् ।
उद्गतं विकृताकारं[1] नाटयेऽतिहसितं मतम् ।।

स्त्रीनीचबालमूर्खादिविषयो हास इष्यते ।
प्रहासश्चातिहासश्च नारीणां नैव दृश्यते ।।

स्मितं विहसितञ्चैव प्रबलेष्वपि हेतुषु ।
विपर्यासेन वैषम्यं नाटकादौ विशेषतः ।।
स्मितञ्च हसितञ्चैव विनष्टानां प्रकीर्तितम् ।
मध्यमानां विहासश्च अवहासश्च दृश्यते ।।
प्रहासश्चातिहासश्च मन्दानामिह जायते ।
विरुद्धैर्विकृतैस्तैस्तैर्विकृतैरपि भूषणैः ।।
विकृतैरेव वचनैरन्यैर्हास्यरसोदयः ।
शङ्का साङ्गा[2]वहित्थञ्च निद्रा चपलता मतिः ।।
ग्लानिः कामश्च लज्जा च हास्ये भावा भवन्त्यमी ।
स्थायिभावोऽस्य हासश्च कथितो भरतादिभिः ।।
अङ्गनेपथ्यवाक्येन विविधैरपि कीर्तितः ।
प्रसिद्धश्चाश्रम (य ?) श्चास्य चेटचेटीविटादयः ।।

इति हास्यरसः ।।

करुणो यथा—

शोकात्मा करुणो रसस्तनुभृतां व्यामोहसम्पादको
निर्णीतो निजगोचरः परिगतो यो द्विप्रकारो मतः ।
पुत्रभ्रातृनितम्बिनीक्षतिभवस्त्वाद्यो[3] द्वितीयः पुन-
र्दीनालोकनरोदनश्रवणतो[4] निर्वेदमोहात्मकः[5] ।।

भूमौ निपतने केशमोक्षणे शोकसम्भवम् ।
रोदनं प्रलापवचनं पुनर्नाटयविदां मतम् ।।

[1] C चितृकृताकारं (?) [2] A शङ्काशङ्का...... [3] B ......भवस्वाद्यो [4] C ......श्रवणयो
[5] B निर्वेद आत्मात्मकः (?)

कायकम्प[1]दृगुत्क्षेपरोमाञ्चाङ्गविवर्तनैः ।
स्वरभङ्गमूकताभूमिपतनापस्मारमूर्छनैः ।
चिन्ताङ्गशोषग्लान्युरस्तालनैरपि भाव्यते ।।
पञ्चाधिकत्रिंशवर्षसंख्यवयाः[2] (?) कपोताङ्गरुचिर्विरुक्षः ।
शूद्रात्मकोऽयं यमदैवतश्च रसः प्रसिद्धः करुणो निरुक्तः ।।

कपोताङ्गरुचित्वेन धूषरवर्णः कथितः ।।

धूषराणि रजोबभ्रुमूषिकाः[3] करूणो रसः ।
(?) धौतरागाधरौ रागौ हिन्दोलः पटमञ्जरी ।।
कपोतः कलभो लूता[4] गर्दभो गृहगोधिका ।
काककण्ठादयश्चेति भवन्ति भुवि नाटके ।।

इष्टभ्रंशधनापायवियोगवधबन्धनैः ।
शापैरेवंविधैरन्यैर्जायते करुणो रसः ।।
(?) विकृतसत्त्वादि शिवाव्याड्राक्षसदर्शनात् ।
(?) वधबन्धनदम्भोलिभैरवारावकारितः ।।
स्थायीभावोऽस्य शोकोऽयं स्त्रीनीचप्रकृतिः पुनः ।
चिन्ता ग्लानिः श्रमो दैन्यं निर्वेदो जडतावृति[5]ः ।।
व्याधिर्मरणमुन्मादो विषादः करुणे[6]भवेत् ।
[7]रणे श्मशाने दुर्गादौ करुणाभिनयो भवेत् ।।

इति करुणरसः ।

रौद्रो नाम रसः समुन्नततरात् क्रोधात्[8] समुत्पद्यते
संग्रामोद्धतवेषयोषचलतास्पर्धादिभावोद्भवः ।
रक्षोदानवयक्ष[9]भैरवशिवाकालादिगात्राश्रय[10]-(?)
स्तेषां वैकृतरूपताश्रयतया[11] प्रायः प्रसिद्धोद्धतः ।।

---

[1] A कायकल्प......(?)　[2] C पञ्चाधिकत्रिंशकवयाः B .....वर्षक.....　[3] AC रजीरक्त....
[4] C भूता　[5] B धृतिः　[6] C करुणो　[7] A omits the line　[8] B .....तरक्रोधात्
[9] C ......ऋक्ष.....　[10] C ......श्रम......　[11] B रूपनिष्ठुरतया

दन्तौष्ठसंपीडनबाहुनादनेत्रारुणत्व[1]भ्रूकुटीविकारैः।
प्रचण्डकण्ठध्वनिशोणिताद्यै रौद्रोऽभिनेयः समरक्रियाभिः॥

पञ्चाशदब्दप्रभवोऽतिहृष्टो जातः कुले[2] शूद्रभवे करालः।
रुद्राधिदेवः[3] किल रक्तवर्णो रौद्राभिधानो रस उक्त एषः॥

तथा च—

शोणानि कुङ्कुमाशोकजवाहिङ्गुलपाटलाः।
भौमोष्णभानुसिन्दूरगुञ्जाकुञ्जर[4]बिन्दवः॥
ताम्रेन्द्रगोपमाणिक्यतेजःखद्योतविद्युतः।
कुशुम्भकुक्कुटशिखानखकिंशुकतक्षकाः[5]॥
नलिनीदाडिमीपुष्पे बन्धूकाधरधातवः।
बिम्बताम्बूलरागासृग्जिह्वानूतनपल्लवाः[6]॥
त्रेता रौद्ररसः क्षात्रधर्मः[7] सारसमस्तकम्।
चकोरकोकिल[8]पारावतनेत्रं नखक्षतम्॥
दृगन्तहंसचञ्च्वङ्घ्रिकपिकीराननाग्नयः।
रक्तचन्दनमञ्जिष्ठामांसान्यलक्तकादयः॥

अमर्षक्रोधमात्सर्यैरधिक्षेपै[9]र्मृषोदितैः।
पारुष्यैरुपघातैश्च स्मृतो रौद्ररसोदयः[10]॥

पारुष्यक्रोधमात्सर्य[11]शस्त्रग्रहणताडनैः।
वदनेक्षणलौहित्यभ्रूभङ्गकरमर्दनैः॥
दन्तौष्ठपीडनस्वेदगण्ड[12]स्फुरणचापलैः।
प्रहारामर्षरोमाञ्चकम्पैः शोणितकर्षणैः।
भुजस्फोटनहस्तादिकर्तनैरभिनयो भवेत्॥

---

[1] A ......नेत्रारुणश्रृ [2] C जातिस्सरः [3] A देवो [4] C ......गुञ्जर......
[5] A .....तस्कराः [6] BC .....किम्पाकपल्लवाः [7] B क्षत्रधर्माः [8] B .....कोक्रिला.....
[9] B .....रधिक्षिप्तै..... [10] A ......रसादयः [11] A .....माश्चर्य.....
[12] A ......गता......

उत्साहो मद आवेशः क्रोधश्चपलता तथा[1]।।
असूयामुग्धताहर्षगर्वाभावाश्च[2] रौद्रजाः।
स्थायी क्रोधोऽस्य भावस्तु गतोऽसावुत्तमाश्रयः[3] ।।
इति रौद्ररसः ।।

वीररसो यथा---

उत्साहस्थायिभावात् प्रभवति रुचिरोऽत्युत्तमप्राणिधर्मात्[4]
सौन्दर्यस्थैर्यधैर्योज्ज्वलचरित[5]मयो गर्वमप्यभ्युपेतः।
आवेशाद्यैश्च भावैर्भवति जनमनोजातमोहस्वभावात्
प्राणत्राणादियुक्तः कथित इह रसो वीरनामा कवीन्द्रैः ।।
उत्तमप्रकृतिर्वीर उत्साहस्थायिभावजः।
औत्सुक्यं मुग्धता हर्ष आवेशोऽथ मदस्तथा ।।
गर्वोऽसूया वितर्कश्च क्रोधोत्साहौ मतिर्धृतिः।
उग्रत्वं रोमहर्षश्च तथामर्षः प्रमत्तता।
भावा एते भवन्त्यत्र रसे वीरे व्यभिचारिणः ।।

प्रतापविनयास्फोटसंमोहध्वंसशक्तयः।
धर्मप्रकृतयश्चास्य विभावाः परिकीर्तिताः ।।

शोणारविन्दारुणदेहकान्तिर्युवा बलिष्ठो नृपभूषणाढ्यः।
राजन्यवंश्यः सुरराजदेवः श्रीमान् महोत्साहयुतः स वीरः ।।

ननु वीररसः पीतवर्णस्तत् कथमरुणदेहकान्तिरिति वर्णितः? नैष दोषः।
कमलासम्पदोः कृष्णहरितो[6]र्नागसर्पयोः।
पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु ।।
चन्द्रेशशैलयोः कामध्वजे मकरमत्स्ययोः।
दानवासुरदैत्यानामैक्यमेवाभिसम्मतः ।।
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता।

---

[1] B क्रोधश्च चपलस्तथा [2] C गर्वामर्षो [3] C मतो साधूत्तमाश्रयः [4] A .....प्राणिधर्मा
[5] C ......जनचरि (त ?) मयो [6] A ......र्लग......

मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ।।

इत्यादि नियमाधायकानेकवचनानुसारेण पीतलोहितयोरैक्यविधानाद्वीररसस्य ीतवर्णत्वं सिद्धमेव ।

तथा च

पीतानि गौरीगरुडागुरुगन्धकरोचनाः ।
विरिञ्चिपञ्चमुखदृग्जटा[1]नमुचिसूदनाः ।।
परागमधुगोमूत्रहरिद्राशालिवल्कलम् ।
दीपचम्पक[2]किञ्जल्कहरितालमनःशिला: ।।
कर्णिकारवीररसौ[3] द्वापरः सारिकामुखम् ।
केशरांशुकमण्डूक[4]चक्रवाकबलीमुखाः ।
केशरं शणपुष्पञ्च पित्तलं कनकादयः ।।

उत्तमप्रकृतिर्वीरो भवेदु[5]त्साहसम्भवः ।
दानवीरो दयावीरो युद्धवीर इति त्रिधा ।।

राजा प्रियमपि सुतं स्वशरीरकं वा
दत्त्वा प्रसन्नवदनो द्विजसत्तमाय ।
क्षुभ्नाति नो न च विषीदति दुःखितोऽपि
प्रोक्तोऽयमेव मुनिना भुवि दानवीरः ।।
हरिश्चन्द्रो बलिः कर्णो दधीचिः पाण्डुनन्दनः ।
एत[6] एव स्मृता लोके दानवीरा मनीषिभिः ।।
मुखप्रसादो हर्षश्च विनयः सत्त्वगामिता ।
धैर्यञ्चाभिनये कार्यं दानवीरस्य सूरिभिः ।।

शरीरं शोणितं मांसं परप्राणहिताय यः ।
सद्यस्तद्वैरिणे दद्याद्दयावीरः स उच्यते ।।
जीमूतवाहनो राजा शिविः सत्यधरस्तथा ।
एवमन्येऽपि राजानो दयावीरा मता भुवि ।।

---

[1] B .....तृजटा...... [2] C दीपप्रका (श ?)...... [3] A ......रसो [4] A ......वण्डुक
[5] A तावदु...... [6] A ग्रत B एते

धैर्यं सत्त्वं क्षमा भक्तिरानन्दश्चाविकारिता ।
एतैरेवाभिनेतव्यो दयावीरः सदा बुधैः ।।

[1]गर्वाभिमानभुजदर्पविशेषशाली
संग्रामसेवनपरो विजितारिवर्गः ।
नानाप्रकारबलवीर्यमदान्धचक्षु-
र्ज्ञातव्य एष विबुधैरिह युद्धवीरः ।।
भार्गवो रामभद्रश्च सुग्रीवोऽथ वृकोदरः ।
मारुतिप्रमुखाः प्रोक्ता युद्धवीरा मनीषिभिः ।।
रोमाञ्चस्मितपूर्वभाषणभुजद्वन्द्वावलोकक्षमा-
घाता[2]स्फोटबलाभिधानसमरस्थैर्यप्रतापादिभिः ।
सोत्साहारुणलोचनप्रवचनप्रायप्रतिज्ञाभवै-
र्भूभङ्गाधरखण्डनैरभिनयः स्याद् युद्धवीरस्य तु ।।

धृत्या मत्या च गर्वेण आवेशामर्षणादिभिः ।
त्यागाक्षेपस्थैर्यधैर्यसौष्ठवादिभिरुल्वणैः ।
अभिनेयो विदग्धेन रसो वीरः समुद्धतः ।।
इति वीररसः ।।

भयानकरसो यथा—

स्त्रीनीचप्रकृतिर्भयानकरसः सम्पद्यतेऽसौ भयाद्-
रक्षोभूतपिशाचघोरसमरारातिश्मशानेक्षणात् ।
ज्ञेयः साहजिक[3] स्तथैव कृतको द्वेधा पुनः सूरिभिः
शङ्कात्रासविमोहकम्पपुलकैरेभिर्विभावैर्युतः ।।
स्तम्भेन गात्रस्य मुखस्य शोषै-
रवास्प (ष्प ?) कम्पैरपि लोमहर्षैः ।
सस्वेददृङ्मीलनदुर्विलासैः
स्वभावजोऽयं कृतिनाऽभिनेयः ।।
भूपालदेवगुरुसेवनलङ्घनेन
प्रौढा[4]रिचौर्यपरयोषिदतिक्रमेन ।

[1] A गर्वाभिमानो भुजदर्पशाली [2] B घात...... [3] AB साहसिक...... [4] AB प्रोढा.....

सम्पद्यते किल रसः कृतकाभिधानो
भावाद्भयादिह भयानक एव लोके ।।

ये ये साहजिके प्रोक्ता भावाः सर्वे भयानके ।
तैस्तैरेवाभिनेतव्यः कृतकोऽपि भयानकः ।।
पञ्चाशदब्दप्रभवोऽञ्जनाभः
शूद्रान्वयो भीषणरूपधारी ।
कालाधिदेवः कथितः कवीन्द्रै-
र्भयानकोऽसौ भयलब्धजन्मा ।।
सम्भ्रमो मरणं चिन्ता शङ्का मोहः श्रमस्तथा ।
विषादो दैन्यवैवर्ण्यस्वेदवेपथुरेव च ।
गद्गदत्वञ्च रोमाञ्च एते भावा भयानके ।।
इति भयानकरसः ।।

बीभत्सरसो यथा—
दुर्गन्धात् पिशितादिमन्दरुधिरच्छेदश्मशानादिभि-
श्चान्यैः प्रायघृणात्मकैरधिगतो जातो जुगुप्सान्वितः[१] ।
स्त्रीबालाधमभूमिकाश्रयमयोऽपस्मारशङ्का[२]दितो
बीभत्सोऽयमुदाहृतो रस इह प्रख्यातनानागुणः ।।

नासाप्रच्छादनं वक्र[३]माननं गात्रमार्जनम्[४] ।
निष्ठीवनञ्च तत्रैवमक्षिमीलनमेव च ।।
अव्यक्तपात (?) पतनमुद्वेगो मरणं तथा ।
अपस्मारो व्याधिरावेशो बीभत्साभिनये[५] भवेत् ।।

मोहो मृषाविषादश्च भयं रोगोऽ[६]धृतिर्मदः[७] ।
उन्मादश्चेति विज्ञेया भावा बीभत्ससंश्रयाः ।।

भिन्नाञ्जनाभो विघृणो विलज्जः
पञ्चाशदब्दप्रभवोऽतिलुब्धः ।

---

[१] BC जुगुप्साश्रितः [२] A ......शङ्को...... [३] AB वक्त्र...... [४] AC गात्रकं जलं
[५] AC ......भिनयो [६] C रागो [७] AC ......र्दमः

बीभत्सनामा वृषलान्वयोऽयं
रसो महाकालपतिः प्रसिद्धः ।।

भिन्नाञ्जनाभत्वेनापि बीभत्सो नीलवर्ण एव बोद्धव्य इति तात्पर्यार्थः। कृष्ण-हरितोरैक्यमिति वचनात्।

तथा च—

नीलानि बुधशैवालदुर्वारवि[1]तुरङ्गमाः।
विसिनीपत्रबीभत्सरसबालतृणान्यपि।
शुको मरकतं नीलमणिर्वंशाङ्कुरादयः।।

इति बीभत्सरसः ।।

अद्भुतरसो यथा—

[2]चित्रेन्द्रजालक्षितिकम्पसूर्य-
वैवर्ण्यदिग्दाहविलोकनेन।
स्यादद्भुतो नाम रसः प्रसिद्धो
यो विस्मयाख्यादुदितश्च भावात् ।।

प्रासादगोपुराट्टालविमानगिरिदर्शनात्।
सभेन्द्रजालशिल्पादिदर्शनैर्दिव्यदर्शनैः ।।
हृदयेप्सितलाभैश्च विभावैरस्य सम्भवः।
विस्मयः[3] स्थायिभावोऽत्र सोऽयमद्भुतसंज्ञकः ।।
प्रस्वेदहर्षरोमाञ्चैः सम्भ्रमैर्नेत्रवारिभिः।
अक्षिविस्फारणैः साधुवादैर्गद्गदभाषणैः ।।
प्रासादोपगमाद्यैश्च तथा चाङ्गुलिचालनैः।
अभिनेयो द्विधैवायमानन्दादिकसम्भवः[4] ।।

स्तम्भः स्वेदश्च रोमाञ्चो[5] मोहो हर्षश्च विस्मयः।
आवेशो जडता मूर्छा एते भावाः स्युरद्भुते ।।

---

[1] B ......दुर्वावलि..... [2] C चितेन्द्रजातमिति...... [3] C विज्ञेयः [4] A .....सन्तकः(?)
[5] C स्वेदोथ रोमहर्षश्च

काञ्चनच्छविरधीरलोचनः
सुन्दरश्च परमेष्ठिदैवतः ।
पञ्चविंशतिकहायनः स्मृतो
वैश्यवंशज इहाद्भुतो[१] रसः ॥

अञ्जनच्छविरिति केचित् पठन्ति । अथ द्वैविध्ये[२] कथ्यमाने तत्रैकतरः पक्षः(?) ।

इत्यद्भुतरसः ॥

शान्तरसो यथा--

निर्वेदतो भवति गर्वविहीनरूपः
सम्यक्प्रबोधजनितोऽपि च रागहीनः ।
शान्तोऽयमुत्तमजनप्रकृती रसो यो
मत्यादिनिष्ठ इह चापि तमोविहीनः ॥

वैराग्यजाततत्त्वैकज्ञानाच्छास्त्रानु[३]चिन्तनात् ।
साधुदौर्गत्यसन्दर्शादागमश्रवणादपि ॥
इष्टदेवानुग्रहेण मदस्थैर्यादिभिस्तथा ।
मत्या[४]दिशीलनादेष रसः शान्तः प्रजायते ॥
मुखनेत्रप्रसादेन स्मितपूर्वप्रियोक्तिभिः ।
स्थिरावलोकवैराग्यश्लाघासर्वाश्रमादरैः ॥
विविक्तदेवस्थानादिवासैर्वात्सल्यशान्तिभिः ।
परनिन्दादिहीनाद्यैः शान्तस्याभिनयो भवेत् ॥
शून्यदृष्टिर्निरालम्बो ध्यानधारणतत्परः ।
समः सर्वेषु भावेषु भवेच्छान्तरसो नटः ॥
धृतिर्मतिर्जुगुप्सा[५]वहित्था निद्रा स्मृतिः क्षमा ।
अविरोधग्लानिलज्जावितर्कौत्सुक्यसम्पदः ।
रसे शान्ते प्रयोक्तव्या एते भावा मनीषिभिः ॥

---

[१] AB इहाद्भुत [२] AC अथवा त्रैविध्ये [३] B ......च्छास्त्रार्थ...... [४] AB यत्या......
[५] A .....जुगुप्सा......

षष्ठ्यब्दतोऽधिकवया हरिदैवतोऽयं
निर्वेदभावजनितोऽपि च रागहीनः।
शुद्धान्व[1]वायजनितो विमलाङ्गयष्टिः
शान्तो रसः सकलसज्जनताश्रयश्च ॥
इति शान्तरसः ॥

कश्चिदत्राह—प्रेमनामा अपरो रसोऽस्ति, तन्मते दश रसा भवन्ति। प्रेम-रसोदाहरणञ्च माता पुत्रमालिङ्गति, पिता पुत्रमालिङ्गति इत्यादि। एतस्यैव प्रेमनाम्नो रसस्य मालतीमाधवटीकायां वत्सल इति नाम।

अथात्र केचिदुदात्तो बलदैवत उद्धतः[2] परशुरामदैवत इति वचनमकिञ्चनाः काञ्चनमिव चार्वाकाः क्षणभङ्गमिव कदाचित् प्राञ्चो न मुञ्चन्ति चेत् तदानीं रसानां द्वादशत्वं न व्यभिचरति। किञ्चास्मन्मतेनोदात्तोद्धतनामानौ रसौ वीररौद्रयोः कृतानुप्रवेशावित्यर्वाचीनशङ्कात्मकवाक्चातुरीं[3] विचिन्वाते[4]। मत-भेदभिन्नतया रसा द्वादश।

एक एव रसः स्थायी रसानां यत्र सङ्करः।
अन्ये चान्योपकाराय जायन्ते व्यभिचारिणः॥
नियता ये रसाः सन्ति तद्भावाः स्थायिनो मताः।
रतिर्यथास्ति शृङ्गारे क्रोधो रौद्ररसे तथा॥
भावं विना रसो नास्ति नास्ति भावो रसं विना।
सज्जनाविरतौ (?) स्यातामन्योन्यमुपकारिणौ॥
ताम्बूलेषु[5] यथा चूर्णपर्णाभ्यां रक्ततोदयः।
अन्योन्यमनुकूलस्य विधानं प्रकृतेस्तथा॥
अप्रस्तावे रसे नाट्ये वैषम्यं याति निर्भरम्।
सर्वोऽवसरमासाद्य नूनमाप्नोति सौष्ठवम्॥
अत एवाहुराचार्या भालुकि[6]प्रमुखा इह।
अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्॥

---

[1] AC शुद्धान्न...... [2] C उद्धृतः [3] AC ......स्वरकेतकीं [4] C वितन्वाते
[5] A ताम्बूलेन [6] A भाल्लुकि

हेतुक्रमाद्रसानान्तु मुख्यत्वमुपजायते ।
तदनुग्राहका ग्राह्या हेयास्तदङ्गहेतवः ।।
मध्ये रसानां सर्वेषां शृङ्गारस्य तु मुख्यता ।
अतस्तदितरे रसे तेनैवाभिभवो मतः ।।
कटुतिक्तकषायाम्लमधुराश्च यथा रसाः ।
लवणेनाभिभूयन्ते शृङ्गारेण तथाऽपरे ।।

रसो न शब्दो न च लोकवाच्यः
किन्तु स्वभावो हृदये[१] जनानाम् ।
भावैर्विभावैरनुभावतश्च
भवेदयं मानसवेद्य एव ।।
विशन्निवाङ्गानि तिरोदधत् स
बहिःस्थितं सर्वमपीह जन्तोः ।
आनन्दरूपी च मुनीन्द्रचित्ते
रसो भवेत् पानकवच्च चर्व्यः ।।
शृङ्गारी स्मितमद्भुतं वितनुते
पान्थस्त्रिवक्रेक्षणे
वीरः कुञ्जरवारणे मृदुरणे
रौद्रः स कंसाहतौ ।
बीभत्सो जितकाशिकेशिजठरोत्-
स्रस्ते[२] स्वहस्ते हरि[३]-
र्भीतो भोजपतेर्वधूविलपने
कारुण्यशान्ताश्रयः[४] ।।

कंसवधप्रयाणप्रसङ्गे ययाऽङ्गलेपनं हरये दत्तं सा सैरिन्ध्री त्रिवक्रा[५]नाम ।

एकः शान्तरसः शुक्लः रोचनी[६] रजनीमणिः ।
आत्मा गजास्यवदनः स्वाराड् गजतुरङ्गमौ ।।

द्वयं शृङ्गारपङ्कासिधारा श्रीरामनन्दनाः ।
आश्विनेयनदीकूलस्तनदन्तच्छदभ्रुवः ।।

---

[१] C स्वभावाद्धृदये [२] A स्रस्तो [३] B मृगेन्द्रैर्हरिः [४] B ......शान्ताशयः
[५] B त्रिवक्त्रा [६] B शुक्ललोचनं C शुक्लः लोचनो

त्रयं वीरस्वरग्रामग्रीवारेखागुणाग्नयः ।
गङ्गाधरहरदृक्कालवलिशूलशिखाजगत् ।।
वामनाङ्घ्रिमहीकोणरामज्वरशिरःपुरः ।
मेरुशृङ्गं कालिदास[1]काव्यं सन्ध्याथ पुष्करम् ।।

चत्वारि मार्गा[2] वर्गाब्धिवेदब्रह्ममुखाश्रमाः[3] ।
उपायवर्णसेनाङ्गयामविष्णुभुजायुगम् ।
पशुपादे[4]न्द्रमातङ्गदन्तशास्त्रदशादयः ।।

पञ्च हास्यरसस्वर्द्रुभूतरौद्रास्यपाण्डवाः ।
व्रताग्नीन्द्रियवर्गाङ्गानिलप्रेतमहामखाः ।।
पुराणलक्षणं पूर्वमहापापेन्द्रियार्थकाः[5] ।।

षट् चक्रवर्तितर्काङ्गसेनानीमुखदर्शनम् ।
त्रिशिरोदृग्वज्रकोणो हास्यं रसगुणर्तवः[6] ।।

सप्त स्वराब्धिगमकपातालार्कतुरङ्गमाः ।
वार[7]व्रीहिमुनिद्वीपराज्याङ्गत्रिदशालयाः ।
वैश्वानरशिखामुक्तिनगरीभुवना[8]दयः ।।

अष्टौ गीतगणब्रह्मकर्णयोगाङ्गदिग्गजाः ।
कुलाचलव्याकरणवसुसिद्धिभुजङ्गमाः ।।
दिक्कालशरभा[9]ङ्घ्रिशमूर्तयो गोखुरादयः ।

नवाङ्क(ङ्ग ? )रसभूखण्डपत्रीज्वरदृशो[10] ग्रहाः ।।
उत्कृत्तो[11]रावणशिरोऽङ्गद्वारकुलमुद्रणाः ।
सुधाकुण्डोपवीतीयगुणव्याघ्री[12]स्तना निधिः ।।

---

[1] A कालिदासस्य [2] A मात्रा [3] B मुखाश्रयाः [4] C पशुपाते......
[5] B ......न्द्रियात्मकाः [6] C गुणरसार्णवः [7] A वारु...... (?) [8] C भवना......
[9] A ......सरभा..... [10] A .....तृशो [11] C उत्कृत्त...... [12] B व्याघ्रा

दशानङ्गदशहस्ताङ्गुलिरावणमस्तकाः ।
शङ्करश्रुतिदिग्विश्वेदेवशीतांशुवाजिनः ।
कृष्णावतारगिरिजाबाहुदायार्जुनाभिधः ।।

एकादश महादेवाः सेनाः कुरुमहीपतेः ।।

द्वादशादित्यसंक्रान्तिसारिकोष्ठकराशयः ।
सेनानीबाहुनयनमासक्षौणीशमण्डलाः ।।

त्रयोदश स्युस्ताम्बूलगुणा[1] दोहादितः कला ।।

चतुर्दश स्युः सप्ताब्धिकूलेन्द्र ध्रुवतारकाः ।
विद्याभुवनमन्वर्करथघोटकदृग्यमाः ।।

पञ्चदश स्युस्तिथयः षोडशेन्दुकलाऽम्बिकाः[2] ।
पृथ्वीचरणवर्णौघास्तथा[3] सप्तदशोदिताः[4] ।।

अष्टादश द्वीपविद्यापुराणस्मृतिध्यान्यकम् ।
अक्षौहिण्यः कुरुक्षेत्रे पर्वाणि दीपकेश्वराः ।।

महास्थानलक्षणानि कथितान्यूनविंशतिः ।।

विंशती रावणभजाङ्गुलीन्द्र[5]हृयलोचनम् ।

मूर्छनैकविंशतिः स्याद् द्वाविंशतिरपि श्रुतिः ।
जरासन्धे त्रयोविंशत्यक्षौहिण्यो रणानुगाः ।।

चतुर्विंशतिरुद्दिष्टा वैशेषिकगुणादयः ।।

---

[1] B ......शुचो [2] BC ......कलात्मिकाः [3] C ......स्ता [4] AC दिशः
[5] A ......लीन्दु......

शतं शतभिषक्तारेन्द्रयज्ञपुरुषायुषम्[१] ।
रावणाङ्गुल्यब्जदलधार्तराष्ट्राब्धियोजनम् ॥

सहस्रं शेषाहिशिरोगङ्गास्यकमलच्छदाः ।
सूर्यरश्म्य[२]र्जुनकरा वेदशाखे[३]न्द्रदृष्टयः ॥

द्विसाहस्रेण गणिता जिह्वा वासुकिशेषयोः ॥

अयोध्यावासिनामायुरब्दो दशसहस्रतः ।
अयुतञ्च तनूजानां[४] पुष्पवाहनभूपतेः ॥
पुत्राः षष्ठिसहस्राणि सगरस्य महात्मनः ।
लक्षमिन्दीवराक्षीणां शशबिन्दोरभूदिति ।
पूर्णं षष्ठिसहस्रेण पुत्रलक्षं मुरद्विषः[५] ॥
(?) सङ्गीते भरतमतमेतत् ।
लक्षाणि षट् प्रचक्ष्यन्ते[६] काकायुर्वत्सराः किल ।
नवलक्षं रामरुद्रनरेन्द्रस्य धनुर्धराः ॥
पुरोक्तः शशबिन्दुर्यो दशलक्षाणि तत्सुताः ।
रन्तिदेवस्य नृपतेः पुत्राः कोटितयोदिताः ॥
छलात् प्रकाशिता संख्या प्रायो ज्योतिर्विदां मुदे[७] ॥

नारायणानिरुद्ध[८]श्रीधरकुलसिन्धुकुमुदिनीबन्धुः ।
दोषाकरतारङ्कोनङ्कः स शुभङ्करो जयति ॥

श्रीदेवकीनन्दनराजशेखरौ सुसेनदामोदरकौ सहोदरौ ।
एषां मदीयाङ्गभुवाञ्चतुर्णां कृते कृतिं वित्त[९] रसेन पूर्णाम् ॥

अपुनर्भव एवास्तु भवश्चेदिति जाग्रतु[१०] ।
लाहाडीय[११]कुले जन्म कविता हरिभक्तयः ॥

---

[१] C ......युधम् [२] C सूर्यरागा..... B सूर्यवाणा..... [३] C ....शास्त्रे..... [४] A दनुजानां C दनूजानां [५] C सुरद्विषः [६] A प्रचयन्ते [७] C मते [८] C ......निबद्ध [९] C चित्त B विजानीत [१०] C जाग्रतः [११] C लाहडीम......

इदमिदमिह नास्ते कुत्रचिल्लक्षणञ्च
स्फुटमितिकृतिवाचः किञ्चनोच्चैः स्फुरन्तु ।
स्फुरति मम न चेतो ग्रन्थबाहुल्यशङ्का–
दरतरलमसारे पीतमाध्वीकसारम् ।।

अपि च—
अनुदितमिह किञ्चिज्जातु तत् सर्वमेतद्[१]–
विदधतु मम गीतं[२] साधु शब्दैरुदाराः ।
अधिरजनिशशाङ्कः किं वियद्ग्लानिशङ्का[३]
तिरयति तिमिरौघं ताडयन्न[४]श्वपादैः ।।
व्याकार[५]स्मृतिकाव्यकोष[६]भरतालङ्कारतर्कागम-
ज्योतिःपिङ्गलनाटकप्रहसनक्रीडामृडानी[७]श्वरः ।
यो द्वैपायनवर्णिते कथिकथोद्गारे निमग्नान्तरः
स श्रीमाननतनोच्छुभङ्करकविः सङ्गीतदामोदरम् ।।

सङ्गीतदामोदरहस्तमुक्तावलीसुधासेवनमेव शेवधिः ।
सङ्गीतशास्त्रैर्गदितैः[८] किमन्यैर्यत्राधियुक्तेक्षुपुलाकसिक्थैः ।।

यूनां[९] यौवतमिन्दिरा धनवतां[१०] वृन्दारकानां सुधा
साम्राज्यं वसुधाभुजां मधुलिहां मालत्युदञ्चिन्मधु ।
किञ्चाम्भो[११]ज्वरिणाञ्चिरागत इव प्रेयान् कुरङ्गीदृशां
चेतोग्राहि तथेदमस्तु गुणिनां सङ्गीतदामोदरम् ।।
आसंसारमुदेतु शंसतु कथां विद्याधरश्रेणिभिः
क्षौणीं वारिधिमेखलां कृतखलामापूरयत् खेलतु ।
[१२]संधत्तां हृदि पञ्चसायकशरानंशस्य तुङ्गां रतिं
सङ्गीतोत्सवसेविनां बहुतमं (मतं?) सङ्गीतदामोदरम्[१३] ।।

---

[१] B जातु यद्वावलिप्तं [२] B कुरु तदवदातं [३] B म्लानिशङ्की [४] C ......स्ताडयन्न..... [५] C रसकार.....(?) [६] B drops कोष [७] A ......मृगमी...... [८] B ......ग्रंथितैः [९] C यूनी [१०] B धवलतां [११] B किञ्चाम्नो (?)..... [१२] A reads : संधत्तां विधि केरलीपतिशरानीशस्य.... C संधत्तां हृदि केरलीपतिशरानीशस्य [१३] A बहुतमं सङ्गीत-दामोदर:C बहुतु सत्सङ्गीतदामोदरः

ख्यातो यः कविचक्रवर्तिपदतो विद्याचनैरञ्चितः
सौभद्रेयमिमं यमर्जुनयशाः सोऽजीजनच्छ्रीधरः।
तस्य श्रील-शुभङ्करस्य भणितौ सङ्गीतदामोदरे
साभोगस्तवकः प्रपञ्चितरसः श्रीमानयं पञ्चमः ॥

इति पञ्चमस्तवकः।

[1]समाप्तश्चायं सङ्गीतदामोदरनामा[2] ग्रन्थ इति ॥*

---

[1] C ends like this : इति श्रीशुभङ्करकृतं सङ्गीतदामोदरं समाप्तम् ॥ श्रीहरिः पुनातु ॥
[2] A ......नाम......
* A ends with the following verse :
रामाग्निकालक्षितिमानशाके कुलीरगे भास्वति कृष्णपक्षे।
नत्वालिखच्छ्रीगुरुपादपद्मं सङ्गीतदामोदरमाशु यत्नात् ॥ श्रीकृष्णः ॥
C ends with the following line : भूकोणाब्धिरसक्षौणीनिमित्ते शकवत्सरे सङ्गीतदामोदरं व्यलिखत् कोऽपि लेखकः। हरिपूर्वः कृष्णसंज्ञो ममास्तु शुभदायकः ॥ श्रीकृष्णो जयति ॥

# SOURCES & REFERENCES

| Page | Line | | |
|---|---|---|---|
| 3 | 1 | For | व्यभिचारिणो भावा: Cf नाटचदर्पण 3. 127. 29 |
| 3 | 9 | Cf | अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभि:। दशरूपक 4.13 |
| 3 | 17 | Cf | दौर्गत्याद्यैरनौजस्यं दैन्यं कार्ष्ण्यामृजादिमत्। Ibid 4.14 |
| 3 | 18 | Cf | परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा। Ibid 4.17 |
| 3 | 19 | Cf | अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता। Ibid 4.18 |
| 4 | 2 | Cf | मन:संमीलनं निद्रा चिन्तालस्यक्लमादिभि:। Ibid 4.23 |
| 4 | 3 | Cf | भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मति:। Ibid 4.27 |
| 4 | 17-19 | Cf | नाटचशास्त्र 22.12-13 |
| 5 | 3 | Cf | गर्वाभिमानादिष्टेऽपि विब्बोकोऽनादरक्रिया। Ibid 2.41 |
| | | also | विब्बोकोऽनादरो मानदर्पादिष्टेऽपि वस्तुनि। नाटचदर्पण 4.185 |
| 5 | 9 | Cf | क्रोधाश्रुहर्षभीत्यादे: संकर: किलकिञ्चितम्। दशरूपक 2.39 |
| 5 | 20 | Cf | प्रियानुकरणं लीला मधुराङ्गविचेष्टितै:। Ibid 2·37 |
| 7 | 6-8 | Cf | अभिलाषोऽथ चिन्ता स्यात् स्मृतिश्च गुणकीर्तनम्।<br>उद्वेगोऽथ प्रलाप: स्यादुन्मादो व्याधिरेव च ।।<br>जडता मरणं चैव दशमं जायते ध्रुवम्।<br>असम्प्राप्तौ भवन्त्येतास्त्रयोदश दशा यथा ।।<br>शृङ्गारतिलक 2.-56 |
| 7 | 9-13 | Cf | प्रथमे त्वभिलाष: . . . . . दशमे मरणं भवेत्। नाटचशास्त्र 22.170-72 |
| 7 | 23 | Cf | चक्षु:प्रीतिर्मन:सङ्ग: सङ्कल्पोत्पत्तिसन्तति:।<br>प्रलापो जागर: कार्श्यमरतिर्विषयान्तरे ।।<br>लज्जाविसर्जनं व्याधिरून्मादो मूर्च्छनं मुहु:।<br>मरणञ्चेति विज्ञेया: क्रमेण प्रेमपुष्टय: ।।<br>सरस्वतीकण्ठाभरण 5.99-100 |

| | | | |
|---|---|---|---|
| 8 | 10 | Cf | कारुर्दासी नटी धात्री प्रातिवेश्या च शिल्पिनी ।<br>बाला प्रव्रजिता चेति स्त्रीणां ज्ञेयः सखीजनः ।।<br>शृङ्गारतिलक 2.65 |
| | | also | प्रातिवेश्या सखी दासी कुमारी कारुशिल्पिनी etc.<br>नाट्यशास्त्र 23.9 |
| 8 | 21 | Cf | ज्ञायमानतया तत्र विभावो भावपोषकृत् ।<br>आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा ।।<br>दशरूपक 4.2 |
| 11 | 1 | Cf | साहित्यदर्पण 3.73 |
| 11 | 15 | Cf | Ibid 3.74 |
| 12 | 17-20 | Cf | नाट्यशास्त्र 22. 211-12 |
| 13 | 25 | Cf | स्वकीया परकीया च सामान्यवनिता तथा ।<br>कलाकलापकुशलास्तिस्रस्तस्येह नायिकाः ।।<br>शृङ्गारतिलक 1.33 |
| 14 | 1 | Cf | कुलजान्याङ्गना वेश्या त्रिधा स्यादभिसारिका ।<br>नाट्यशास्त्र 1.84 |
| 14 | 2 | Cf | कुलजा सम्बृता त्रस्ता सव्रीडा च द्रुतं व्रजेत् । Ibid 1.85 |
| 14 | 6 | Cf | नायकं परनारी च समन्तादनवेक्षिता । Ibid 1.85 |
| 14 | 7-9 | Cf | सखीयुक्ता मदाधिक्यात् स्फारिताक्षी न शङ्किता ।<br>सशब्दाभरणा कामं वेश्या सरति नायकम् ।। Ibid 1-86 |
| 14 | 5 | Cf | संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।<br>अवगुण्ठनसंवीता कुलजाभिसरेद् यदि ।।<br>* * * * *<br>मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।<br>आविद्धगतिसञ्चारा स्यात् प्रेष्याभिसरेद् यदि ।।<br>साहित्यदर्पण 3.77-79<br>also नाट्यशास्त्र 22.228-29 |
| 15 | 6-12 | Cf | अतिरक्ततया नार्यां सदा त्यक्तपराङ्गनः ।<br>सीतायां रामवत् सोऽयमनुकूलः स्मृतो यथा ।।<br>यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति ।<br>न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा ।। |

प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् ।
ज्ञातापराधचेष्टश्च कुटिलोऽसौ शठो यथा ।।
निःशङ्कः कृतदोषोऽपि विलक्षस्तर्जितोऽपि नो ।
मिथ्यावाग् दृष्टदोषोऽपि धृष्टोऽसौ कथितो यथा ।।
शृङ्गारतिलक 1.25-28

| | | | |
|---|---|---|---|
| 15 | 20-24 | | भक्तिरत्नाकर quotes as: सङ्गीतमुक्तावल्याम् । p. 233 |
| 16 | 4-5 | | भक्तिरत्नाकर quotes as: तथाहि सङ्गीतपारिजाते p. 232 |
| 16 | 6-7 | | ,, ,, ,, ,, सङ्गीतदामोदरे p. 232 |
| 16 | 9-10 | | ,, ,, ,, ,, तथा च नारदसंहितायाम्—<br>धातुमातुसमायुक्तं गीतमित्यभिधीयते ।<br>तत्र नादात्मकं गेयं धातुरित्यभिधीयते ।। p. 234 |
| 16 | 18-19 | Cf<br>also | रत्नकोष page 1, lines 17-18<br>quoted in भक्तिरत्नाकर p. 231 |
| 16 | 22-23 | | quoted in भक्तिरत्नाकर as विशेषमाह सङ्गीतदामोदरे p. 234 |
| 17 | 4-5 | | quoted in भक्तिरत्नाकर p. 234 |
| 17 | 10-11 | | ,, ,, ,, |
| 17 | 16 | | भक्तिरत्नाकर quotes the line as: तथाहि सङ्गीतसारे p. 255 |
| 18 | 6 | | भक्तिरत्नाकर (p. 261) quotes as : तथाहि दामोदर-पञ्चमसारसंहितयो :—<br>ध्रुवको मण्ठकश्चैव प्रतिमण्ठो निसारुकः ।<br>रासकः प्रतितालश्च तथान्या चैकतालिका ।।<br>यतिश्च झुमरिश्चेति सालगः शूड ईरितः ।। |
| 18 | 22 | | भक्तिरत्नाकर (p. 262) quotes as : ध्रुवकादीनां भेदमाह—<br>ध्रुवकाः षोडश प्रोक्ता मण्ठकाः षट्प्रकारकाः ।<br>प्रतिमण्ठाश्च पञ्चैव सप्त ख्याता निशारुकाः ।।<br>चत्वारो रासकाः प्रोक्ताश्चत्वारः प्रतितालकाः ।<br>एकताली च त्रिविधा चतस्रो यतयो मताः ।<br>एकैव झुमरिश्चेति सालगाः कथिता इमे ।। |
| 19 | 10 | | भक्तिरत्नाकर quotes as: तथाहि p. 256 |
| 19 | 13 | | भक्तिरत्नाकर quotes as: तथाहि शिरोमणौ p. 256 |

| | | |
|---|---|---|
| 30 | 1-3 | भक्तिरत्नाकर quotes as follows : तथाहि—<br>स स्वरो यः श्रुतिस्थाने स्वनन् हृदयरञ्जकः ।<br>षडजर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।। p. 237 |
| 30 | 4-5 | भक्तिरत्नाकर quotes as : दामोदरस्तु—p. 239 |
| 30 | 7ff | भक्तिरत्नाकर quotes with slight changes as follows :<br>दामोदरस्त्वन्यथाह—<br>वायुः सम्मूर्छितो नाभेर्नाभ्याश्च हृदयस्य च ।<br>पार्श्वयोर्मस्तकस्यापि षण्णा षड्जः प्रजायते ।।<br>नाभिमूलाद् यदा वायुरुत्थितः कुरुते ध्वनिम् ।<br>वृषभस्येव निर्याति हेलया ऋषभः स्मृतः ।।<br>नाभेः समुद्गतो वायुर्गन्धं श्रोत्रे च चालयन् ।<br>सशब्दं येन निर्याति गान्धारस्तेन कथ्यते ।।<br>- - - -<br>- - - -<br>प्राणोऽपानः समानश्चोदानव्यानौ तथैव च ।<br>- - - - ।। p. 237-38 |
| 32 | 6ff | भक्तिरत्नाकर quotes with slight variations as follows :<br>तथाहि—<br>स्वरः संमूर्छितो यदा रागतां प्रतिपद्यते ।<br>नाम्ना तां मूर्छनामाहुर्भरतो ग्रामसम्भवाम् ।।<br>- - - -<br>सौवीरा वर्णमध्या च षड्जमध्या च पञ्चमी ।<br>- - - -<br>- - - खेचरी वरा ।<br>नादवती - - -<br>एकविंशतिरित्युक्तं मूर्छनाश्चन्द्रमौलिना ।। p. 241 |
| 33 | 10 | भक्तिरत्नाकर adds further after the line :<br>- - - पृथक् पृथक् ।<br>भेदा बहुतरास्तेषां कस्तान् कार्त्स्न्येन वक्ष्यति ।।<br>ग्रामाणां मूर्छनानाञ्च तानानां बह्वो भिदाः ।<br>प्रकृतानुपयोगित्वादज्ञेयत्वाच्च नेरिताः ।। p. 242 |
| 33 | 18-19 | quoted in भक्तिरत्नाकर as तथाहि । p. 248 |
| 34 | 20-21 | ,, ,, ,, नारदपञ्चमसंहितायाम् । p. 248 |

| | | | |
|---|---|---|---|
| 35 | 13ff | | ,, ,, ,, तथाहि सङ्गीतदामोदरे। p. 249 |
| 35 | 14 | | भक्तिरत्नाकर adds a line after this as follows:<br>एते पुमांसः षड्रागाः क्रमात् तद् रागिणीर्ब्रुवे। |
| 36 | 10 | Cf | सङ्गीतदर्पण, रागाध्याय |
| 36 | 18 | Cf | सङ्गीतदर्पण, noting the slight variations:<br>- - निबद्धबाहुः - - - -<br>- - विचरन् प्रतापी नटोऽयमुक्तः किल रागमूर्तिः ॥ |
| 36 | 22 | Cf | Ibid |
| 37 | 9 | Cf | सङ्गीतदर्पण noting the slight variations:<br>- दयितं सुकेशी - - -<br>- - सुरवृक्षपुष्पं - - - - |
| 37 | 17 | Cf | सङ्गीतदर्पण with one change:<br>- - - - - -<br>- कपोतद्युतिकामयुक्तः - - - |
| 37 | 21 | Cf | सङ्गीतदर्पण noting the slight variations and the difference in the name of the *rāga* (कामोंदिका):<br>- - - - - ।<br>विलोकयन्ती विदिशोऽतिभीता कामोदिका कान्तमनुस्मरन्ती ॥ |
| 38 | 1 | Cf | सङ्गीतदर्पण, रागाध्याय |
| 39 | 1 | Cf | Ibid |
| 39 | 17 | Cf | सङ्गीतदर्पण with slight variations in the first line:<br>- - दयिते च - - भूषणमङ्गकेषु। |
| 39 | 25 | Cf | सङ्गीतदर्पण with slight variations:<br>- - - - पल्लवतल्पमध्ये।<br>श्रुतिस्वराणां - - - - ॥ |
| 40 | 19 | Cf | सङ्गीतदर्पण with slight variations:<br>- भासुरभूषणा - - - -<br>कान्ते समीपे कमनीयकण्ठा |
| 40 | 25 | Cf | Ibid |

| | | | |
|---|---|---|---|
| 51 | 15-17 | Cf | भक्तिरत्नाकर quotes as: सङ्गीतदामोदरे p. 274 |
| 51 | 18-24 | | Ibid quotes as : तथाहि सङ्गीतदामोदरे with slight variations:<br>- - - - -<br>- - - - -<br>त्रिशरी शतचन्द्री च नकुलौष्ठी च कंसरी।<br>औडम्बरी - - - पुष्कलस्तथा ॥<br>- - - - शरमण्डलः।<br>कपिलासो - - - - - ॥ p. 274 |
| 53 | 1-4 | | quoted in भक्तिरत्नाकर p. 275 |
| 55 | 1 ff | | quoted in वाचस्पत्य under आनद्ध। |
| 55 | 20 | | भक्तिरत्नाकर quotes with a little change:<br>तथाहि सङ्गीतदामोदरे—<br>मृत्तिकानिर्मिताश्चैव मृदङ्गाः परिकीर्तिताः। p. 274 |
| 55 | 26 | | quoted in भक्तिरत्नाकर with the previous line. p. 274 |
| 56 | 1 | | " " " " " " " " |
| 58 | | | Last four lines quoted in भक्तिरत्नाकर as तथाहि। p. 275 |
| 61 | 13-16 | Cf | नाट्यशास्त्र 8. 18-19. |
| 61 | 25 ff | Cf | अभिनयदर्पण p. 93 and p. 104.<br>also अग्निपुराण Chap. 341. |
| 62 | 1-7 | Cf | नाट्यशास्त्र 9. 4-7 |
| 62 | 9-13 | Cf | नाट्यशास्त्र 9. 8-10 |
| 62 | 15 ff | Cf | Ibid 9. 11-17 |
| 64 | last 4 lines | Cf | एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता।<br>द्विपादक्रमणं यत्तु करणं नाम तद्भवेत्।<br>करणानां समायोगः खण्ड इत्यभिधीयते।<br>खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तैर्मण्डलं भवेत्॥<br>नाट्यशास्त्र 10. 3-4 |
| 65 | 1 ff | Cf | नाट्यशास्त्र |

| | | | |
|---|---|---|---|
| 66 | 3-4 | Cf | तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च ।<br>व्यायामं कारयेद् धीमान् भित्तावाकाशिके तथा ।।<br>नाटयशास्त्र 10. 97 |
| 66 | 14 ff | Cf | नाटयशास्त्र |
| 72 | 15-8 | Cf | नटी विदूषको वापि पारिपार्श्विक एव वा ।<br>सूत्रधारेण सहिताः संलापं यत्र कुर्वते ।।<br>चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।<br>आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ।।<br>नाटयशास्त्र 20. 30-31, also साहित्यदर्पण 6. 31-32 |
| 72 | last 2 lines | | Exactly same in नाटयशास्त्र 19. 21 |
| 73 | 1 | Cf | साहित्यदर्पण 6. 122-23 |
| 75 | 12-17 | Cf | उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ।<br>उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात् ।।<br>प्रभातं गगनं रात्रिं प्रदोषं दिवसं तथा ।<br>ऋतून् घनान् वनान्तांश्च विस्तीर्णाश्च जलाशयान् ।।<br>दिशो ग्रहान् सनक्षत्रान् किञ्चित् स्वस्थं च यद्भवेत् ।<br>तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ।।<br>एभिरेव करैर्भूयस्तेनैव शिरसा पुनः ।<br>अधोनिरीक्षणेनाथ भूमिस्थान् संप्रदर्शयेत् ।।<br>नाटयशास्त्र 25. 2-5 |
| 79 | 22 | Cf | नाटिका त्रोटकं गोष्ठी सट्टकं नाटयरासकम् ।<br>प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ।।<br>संलापकं श्रीगदितं शिल्पकं च विलासिका ।<br>दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ।।<br>अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।।<br>विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ।।<br>साहित्यदर्पण 6. 4-6<br>It is to be noted that the Sāhityadarpaṇa gives the number as eighteen whereas in this book it is seventeen leaving out प्रकरणी from the list. |
| 81 | 7-8 | Cf | देवतादर्शनान्तं भवति हि नाटकं नाम ।<br>रत्नकोष p. 17 line 388 |

81 last 4 lines Cf उज्ज्वलवेषाभरणः कुप्यत्यनिमित्ततः प्रसीदति च ।
प्राकृतभाषाचारो भवति शकारो बहुगुणाढ्यः ।।
भावप्रकाश p. 242 lines 22-23

82 1-2 Cf आगमलिङ्गविहीनं देशकुलन्यायलोकविपरीतम् ।
व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ।।
भावप्रकाश p. 243 lines 1-2

84 9-10 Cf संरंभं परमानीय युद्धं व्याजान्निवारयेत् ।
बधप्राप्तस्य कुर्वीत बधं नैव महात्मनः ।।
दशरूपक 3. 75
As is evident the author has simply transposed the above lines of दशरूपक here.

84 11 Cf मृगवदलभ्यां नायिकां नायकोऽस्मिन्नीहते इतीहामृगः ।
धनिक's commentary on दशरूपक 3. 72ff

86 1-2 Cf गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।।
प्रच्छेदकस्त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चैवमुक्तप्रत्युक्तमेव च ।।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ।।
नाट्यशास्त्र 19. 119-20
also दशरूपक 3. 52-63
नाट्यदर्पण 18. 170-71
भावप्रकाश page 245 line 11
साहित्यदर्पण 6. 212-13

93 12-16 Cf प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता ।
नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ।।
हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ।।
साहित्यदर्पण 6. 274-75

95 last line Cf उदात्तनायकं तद्वत् पीठमर्दोपनायकम् । साहित्यदर्पण 6. 274

96 4ff Cf दुर्मल्ली चतुरङ्का स्यात् कैशिकीभारतीयुता ।
अगर्भा नागरनरा न्यूननायकभूषिता ।।
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ।।

षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान ।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः ।।
साहित्यदर्पण 6. 303-305

96 last 2 lines Cf सुबन्धुर्नाटकस्यापि लक्षणं प्राह पञ्चधा ।
पूर्ण चैव प्रशान्तं च भास्वरं ललितं तथा ।।
समग्रमिति विज्ञेया नाटके पञ्च जातयः ।
पूर्णस्य नाटकस्यास्य मुखाद्याः पञ्च सन्धयः ।।
भावप्रकाश p. 238 l. 15-18

97 1-2 मुखं प्रतिमुखं चैव गर्भो विमर्श एव च ।
तथा निर्वहणं चेति नाटके पञ्च सन्धयः ।। नाटचशास्त्र 19. 37

97 3-12 Cf प्रार्थना विषयौत्सुक्यमारम्भो हेतुचिन्तनम् ।
बीजं साध्योपगमनं मुखसन्धिरिति त्रयम् ।।
लाभः साधनसम्पत्तिः प्रसरः प्रसृता क्रिया ।
चित्रसाधनसम्बन्ध इति प्रतिमुखे त्रयम् ।।
सम्भोगो योग्यता तत्र उद्भेदः सन्धिदर्शनम् ।
मित्रसम्पत्पताकेति त्रयं गर्भे प्रकीर्तितम् ।।
नाशः कारणवैधुर्य किञ्चिच्छ्रेयः सविघ्नता ।
एतान्यवमर्षसन्धौ कथितानि मनीषिभिः ।
पुनर्बीजेन सम्पत्तिर्विमर्शे त्रितयं भवेत् ।।
रत्नकोष p. 20 lines 460-67

97 15ff Cf उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।।
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ।।
नाटचशास्त्र 19. 57-58 also भावप्रकाश p. 208 l. 9-11
also नाट्यदर्पण 1. 41-42, साहित्यदर्पण 6. 81-82

97 20-23 Cf नाट्यदर्पण 1.43-47
and साहित्यदर्पण 6.87-88

97 26-27 Cf साहित्यदर्पण 6.94-95

98 11-14 Cf Ibid 6.108-9

98 last 4 lines Cf साम भेदः प्रदानं च दण्डश्च बध एव च ।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ।।

साहसं च भयश्चैव धीर्माया क्रोध एव च ।
रुजः सम्बरणं भ्रान्तिस्तथा हेत्ववधारणम् ।।
दूतोपधी तथा स्वप्नश्चित्रं मद इति ।
रत्नकोष p. 39 lines 925-29

101 16 Cf काव्यप्रकाश 4.28

101 19-20 Cf न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ।।
नाट्यशास्त्र 6.40

101 23ff Cf काव्यप्रकाश 4th *ullāsa*.

102 16-17 Cf व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं भावा रसाश्चैव भावयन्ति परस्परम् ।। Ibid 6.41

102 20-21 Cf शृङ्गाराद्धि भवेद्धासो रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः ।। Ibid 6.44

102 22-23 Cf उभौ शृङ्गारबीभत्सावुभौ वीरभयानकौ ।
रौद्राद्भुतावुभौ हास्यकरुणौ प्रकृतिद्विषौ ।।
रसार्णवसुधाकर 2. 257

133 11 Cf श्यामो भवति शृङ्गारः । नाट्यशास्त्र 6.47

102 13ff Cf नीलानि कृष्णचन्द्राङ्कव्यासरामधनञ्जयाः ।
शनिद्रुपदजा काली राजपट्टविदूरजम् ।।
विषाकाशकुहूशस्त्रागुरुपापतमोनिशाः ।
रसावद्भुतशृङ्गारौ मदतापिच्छराहवः ।
सीरिचीरं यमो रक्षः कण्ठः खञ्जनकेकिनोः ।
कृत्या छाया गजाङ्गारखलान्तःकरणादयः ।
अलङ्कारशेखर Chap. 17

107 12ff Cf वस्तुगत्या यन्न भवति तदपि कविभिर्निबध्यते—
रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि ।।
तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचीभेद्यता ।
शुक्लत्वं कीर्तिपुण्यादौ कार्ष्ण्यं चाकीर्त्यघादिषु ।।

प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः।
ज्योत्स्नापानं चकोराणां सेवालं सर्ववारिषु ॥
केसराशोकयोः सत्स्त्रीगण्डूषात् पादघाततः।
मासान्तरेऽपि पुष्पाणि रोमालिस्त्रिवलिस्त्रियाम् ॥
अलङ्कारशेखर chap. 15

107 21-23 Cf वसन्ते मालतीपुष्पं फलपुष्पे च चन्दने।
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता।
नारीणां श्यामता पातः स्तनयोर्यच्च वा ह्रिये। Ibid

108 1ff Cf भूर्जत्वग् हिमवत्येव मलयेष्वेव चन्दनम्।
रक्तत्वं रत्नबन्धूकबिम्बाम्भोजविवस्वताम् ॥
कृष्णत्वं केशकामालिपिककाकपयोमुचाम्।
सामान्यशौक्ल्यं छत्राम्भःपताकापुष्पवाससाम् ॥
वसन्त एव वर्ण्य स्यात् परपुष्टस्य कूजितम्।
वर्षास्वेव मयूराणां रुतं नृत्यं च वर्णयेत् ॥
मन्दारमरन्दचम्पू chap. 11
also Cf अलङ्कारशेखर chap. 15

108 10-12 Cf नाट्यशास्त्र 6.61

103 5-8 Cf पीतानि दीपजीवेन्द्रगरुडेश्वरदृग्जटाः।
ब्रह्मावीररसस्वर्णकपिद्रापररोचनाः।
किञ्जल्कचक्रवाकाद्या हरितालमनःशिलाः ॥
अलङ्कारशेखर chap. 17

112 last 5 lines Cf कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः।
पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु ॥
चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः।
दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ॥
चिरन्तनस्यापि तथा शिवचन्द्रस्य बालता।
अलङ्कारशेखर chap. 15

113 1 Cf मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः। Ibid

115 17-18 Cf नासाप्रच्छादनं वक्त्रकूणनं गात्रसंवृतिः।
निष्ठीवनादि चात्र स्यादुद्वेगादुत्तमेष्वपि ॥
शृङ्गारतिलक 3.15

119 15-22 Cf शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसाश्रयः पशुपतिर्भूयात् सतां भूतये ॥ Ibid 1.1

119 24ff Cf अलङ्कारशेखर Chap. 18
&
मन्दारमरन्दचम्पू Chap 11 संख्याप्रकरणम्